

*अभिराज डॉ० राजेन्द्र मिश्र*

जौनपुर जनपद के सईतटवर्ती ग्राम द्रोणीपुर में, संवत् २००० विक्रमी (पौष कृष्ण पंचमी) में जन्म।
पितृचरण स्वर्गीय पं० दुर्गाप्रसाद मिश्र तथा माँ श्रीमती अभिराजीदेवी मिश्रा।
पितृव्यचरण डॉ० आद्याप्रसाद मिश्र (सम्प्रति कुलपति, प्रयागविश्वविद्यालय) के संरक्षण में उच्चशिक्षार्जन। प्रयाग विश्वविद्यालय की एम० ए० परीक्षा (संस्कृत) सन् ६४ में उत्तीर्ण तथा कलासंकाय में प्रथम स्थान।
अब तक २५ शोधनिबन्ध, १८ मौलिक हिन्दी-संस्कृत कृतियाँ तथा ३०० से भी अधिक स्फुट काव्यरचनाएँ देश की मान्य पत्र-पत्रिकाओं में प्रकाशित।
नाट्यपञ्चगव्यम्, अकिञ्चनकाञ्चन, आर्यान्योक्तिशतकम् तथा नवाष्टकमालिका के सन्दर्भ में उ० प्र० शासन द्वारा चार बार पुरस्कृत। मुक्तिदूत (हिन्दी खण्ड-काव्य) उत्तरप्रदेशीय हाईस्कूल कक्षाओं के पाठ्यक्रम में स्वीकृत।
आगामी प्रकाशन—जानकीजीवनम् (१९ सर्गात्मक महाकाव्य)
अन्य प्रमुख पूर्ण संस्कृत रचनाएँ—प्रमद्वरा (नाटिका) चौरशतकम् (गीतकाव्य) अभिराजशतकम्।

# नाट्यपञ्चामृतम्

( पञ्चैकाङ्किरूपकसङ्कलनम् )

प्रणयति

मिश्रोऽभिराजराजेन्द्रः

प्रयागविश्वविद्यालयीयसंस्कृतविभागे

प्रवक्तृपदमलङ्कुर्वाणः




अक्षयवटप्रकाशनम्

८, बाघम्बरी मार्ग इलाहाबाद

प्रकाशक :

© अक्षयवट प्रकाशन

८, बाघम्बरी मार्ग, इलाहाबाद

प्रथम संस्करण : दिसम्बर १९७७

मूल्य : पन्द्रह रुपये ( १५ रु० )

पुस्तकालय संस्करण : बीस रुपये



मुद्रक : सत्य महेश प्रेस,

२३/४७/१२१ एफ़० अल्लापुर

इलाहाबाद—६

# NĀTYAPANCHĀMṚTAM



( A Collection of five one-act plays )

BY

ABHIRĀJA DR. RĀJENDRA MISHRA
Lecturer in Sanskrit
ALLAHABAD UNIVERSITY




AKSHAYAVAT PRAKASHANA
8, Baghambari Road, Allahabad

Published by :
© AKSHAYAVAT PRAKASHANA
8, Baghambari Road, Allahabad.


First Edition : December 1977
Price : Rupees Fifteen ( Rs. 15.00 )
Library Edition : Rupees Twenty



Printed by :
SATYA MAHESHA PRESS
23/47/121 F Allahpur, Allahabad—6.

# प्रास्ताविक



प्रस्तुत संग्रह में मेरे पाँच नये एकाङ्की हैं। दो पौराणिक: दास्यापनोदनम् तथा अर्जुनोर्वशीयम्। दो ऐतिहासिक: प्रीतिनिर्यातनम् तथा समर्चितमृत्तिकम्। एक सामाजिक: छलिताधमर्णम्।

दास्यापनोदनम् में पुराणप्रसिद्ध कद्रू एवं विनता का सपत्नी-कलह चित्रित किया गया है। महापराक्रमी, विनतानन्दन गरुड नागबालकों द्वारा तिरस्कार एवं लाञ्छना प्राप्त करके उद्विग्न हो उठते हैं। इसी सन्दर्भ में उन्हें अपनी माँ से कद्रू तथा उसके पुत्रों का घृणित छल-प्रपञ्च ज्ञात होता है। निर्दोष माँ को कद्रू की दासता से मुक्त करने के लिये गरुड़, नागों की शर्त के अनुसार, देवराज इन्द्र से अमृत प्राप्त कर नागों को अर्पित कर देते हैं, विनता का दासीभाव समाप्त हो जाता है।

अर्जुनोर्वशीयम् में निवातकवच तथा कालिकेय दानवों का संहार करने वाले कुन्तीनन्दन अर्जुन तथा उर्वशी का भ्रान्तिजन्य प्रणयव्यापार प्रस्तुत किया गया है। ऊर्वशी के नैसर्गिक प्रणयनिवेदन तथा मनसिजव्यथा को तिरस्कृत करके धर्मभीरु पार्थ अन्तत: बृहन्नला होने का शाप पाते हैं परन्तु उनका उद्दीप्त चरित्र अक्षत बना रहता है।

प्रीतिनिर्यातनम् में बुरहानपुर के समीप स्थित जैनाबाद की अनिन्द्य-सुन्दरी नर्तकी जैनाबादी (परिवर्तित नाम जैनाबाई) और संगदिल कहे जाने वाले मुगल शाहंशाह 'आलमगीर' औरंगजेब की प्रीतिकथा निबद्ध की गई है। इस्लाम का कट्टर अनुयायी तथा मदिराचषक का स्पर्श तक न करने वाला औरंगजेब अपनी प्राणातिप्रिय मलिका की खुशी के लिये शराब का जाम होठों पर रख लेता है। परन्तु पीने से पूर्व ही जाम टूट जाता है, जैनाबाई के हाथ की चोट खाकर! वस्तुत: मलिका अपने प्रति शाहंशाह के प्रेम की परीक्षा ले रही थी।

समर्चितमृत्तिकम् में देश की माटी का मूल्य निरूपित किया गया है। १९६५ ई० के सितम्बर महीने में होने वाले भारत-पाक युद्ध में मेजर आशाराम त्यागी ने जाटरेजिमेण्ट का नेतृत्व किया था। विजय पर विजय प्राप्त करते हुए यह रणदुर्मद वीर २५ सितम्बर को लाहौर के समीप डोगराई कस्बे पर टूट पड़ा तथा मृत्यु का वरण करने से पूर्व ही डोगराई सैन्य-चौकी पर तिरंगा झण्डा फहरा दिया।

छलिताधमर्णम् में अधुनातन-समाज का एक जीता-जागता तथ्य प्रस्तुत किया गया है। आलोक एक सच्चरित, नि:स्पृह तथा आदर्शवादी नवयुवक है। वह दहेज से घृणा करता है तथा किसी शान्त, सुशील एवं साध्वी कन्या

मूलं श्रीकविकालिदासकविता श्रीहर्षवाणी तनुः
पत्रं श्रीजयदेवदेववचनं श्रीविल्हणोक्तं सुमम् ।
श्रीमत्पण्डितराजकाव्यगरिमा यस्यैकपुण्यं फलं
जीव्याद्धन्त निसर्गजोऽयमभिराड्राजेन्द्रकाव्यद्रुमः ॥

## पात्रपरिचयः

| | |
|---|---|
| नटी | ( सूत्रधारप्रिया ) |
| विनता | ( सुपर्णजननी ) |
| सारिका | ( शचीसेविका ) |
| मल्लिका | ( शचीसेविका ) |
| सूत्रधारः | ( कथाप्रस्तावकः ) |
| सुपर्णः | ( पक्षिराजोगरुडः ) |
| पुरन्दरः | ( अमरावतीश्वरः ) |
| विरञ्चिः<br>नारदः<br>नागपुत्रः | } परोक्षपात्राणि |

रचनाकालः मार्च १९७८ ई० ।

पन्थानं नाप्नुवाना भ्रमति सुरनदी यज्जटासु प्रमुग्धा
यच्छीर्षे सैंहिकेयप्रकटतरभिया भाति लग्नेन्दुलेखा।
काशी मुक्तिप्रदात्री प्रभवति नितरां यत् त्रिशूलाधिरूढा
योगक्षेमं समेषां भरतभुवि सतां चिन्तयेत्सः पिनाकी ॥१॥

अपि च

क्षुभ्यत्पाथोधिरिङ्गत्तरलतरतरङ्गोच्छलद्वारिराशि
पादाघातप्रमुह्यत्क्षितिभरविनमत्प्रौढशेषास्यतुण्डम्।
धूत्कुर्वन्नेत्रजाग्निप्रकटचिटचिटारावसम्पूरिताशं
शम्भोस्तत्ताण्डवाख्यं कलितनवयुगं पातु वो भीमनृत्यम् ॥२॥

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

आदिष्टोऽस्मि परिषदा यदद्य केन्द्रीयशासनप्रवर्तितसाहित्यअकादमी-समायोजिते एकाङ्किरूपकमहोत्सवेऽस्मिन् समागतानां विविधभाषा-भाषिणां सहृदयसरस्वतीपुत्राणां सामाजिकानाञ्च मनोरञ्जनाय कश्चिदभिनवः प्रयोगोऽनुष्ठातव्यः।

( चिन्तां नाटयन् )

तदस्यां काशीनागरीप्रचारिणीसभायां समुपस्थितान् दर्शकान् केनाभिनवेन रूपकेण विनोदयानि? धर्मप्राणभूतेयं हरनगरी। प्रतिशृङ्गाटकं शिवालयोऽत्र दृश्यते, प्रतिनयनं गङ्गाजलं प्रत्याननञ्च ताम्बूलम्!

( नाट्येन परिक्रम्य पुरतोऽवलोक्य सस्मितम् )

मन्ये एतादृशमेव लघुरूपकं प्रयोज्यमिदानीं येन मनोरञ्जनं भवतां भवेत् आस्थाऽपि धर्मे बलवती स्यात्। तत् साम्प्रतम् (इत्यर्धोक्त एव) (दशवर्षदेशीयं कञ्चिद् बालकं ताडयन्ती नटी प्रविशत्यपटीक्षेपेण) ब्रूहि रे पाटच्चर! हट्टं गमिष्यसि न वा? अनलसोऽसि भोजने। निखिलमेव महानसं जठराग्निना दग्धुं प्रभवसि। कार्याणि कः करिष्यति, तव पिता पितामहो वा?

( भीतो बालकः सूत्रधारमवलम्बते )

सूत्रधारः चण्डि ! किमिदम् अकाण्डे प्रथनम् ? भृशमनवसरज्ञाऽसि यदुचितम् अनुचितं वापि न पश्यसि ।

नटी ( सकोपम् )
भवतैव विहितसपर्योऽयं दुष्टबटुकश्चतुष्पथबलीवर्द इव प्रतिपलं रोमन्थमभ्यस्यति । तत् किम्मयैव हट्टकार्याण्यपि सम्पादनीयानि ?

सूत्रधारः ( बालकं सस्नेहमुपस्पृशन् नटीं प्रति )
मन्ये कृतापराधोऽयं किन्तु (इत्यर्धोक्ते)

नटी जानामि किं भणिष्यसि ! 'किन्तु शिशुरयं, मातृहीनोऽयम् अनाथोऽयम् इति । तत् किमस्मद्गृहम् अनाथालयो येनाऽयं डुण्डुभोऽत्रानीतः ?

सूत्रधारः देवि ! (किञ्चित् कथयितुमिच्छति )

नटी ( सरोषं परावृत्य )
मृता ते देवी ! साम्प्रतं स्वकीयं रघुनन्दनम् उत्सङ्गतल्पम् अधिरोप्य कुशलम् पृच्छतु भवान् ! याम्यहम् । कापालिकस्य ते बलिकर्मणि यदहमेव छागीभूतास्मि ।
( इति निष्क्रान्ता )

सूत्रधारः (सखेदं पुरतोऽवलोक्य )
हन्त भोः ! गृहण्यपि नाम निर्बला बडवेव अविश्वसनीया । इमं खलु अज्ञातकुलगोत्रं दारकं मत्स्योदरीचतुष्पथात् विलपन्तमानीतवानस्मि । मन्ये पुत्रहीनस्य मम लोकैषणां प्रवृद्धस्सन् सम्पादयिष्यत्ययम् । किन्तु गृहचण्डिका मे क्रीतदासमिमं मन्यमाना न साध्वाचरत्यनेन सार्धम् !
( नेपथ्ये विवादस्वरोऽनुश्रूयते )

प्रथमस्वरः त्वमेवास्माकं दासोऽसि ।

द्वितीयस्वरः अपेहि रे दुर्विष ! द्विजिह्व !! को नु खलु मां वैनतेयं दासीकर्तुं समर्थः ?

प्रथमस्वरः अलं सन्तप्य । गच्छ तावन्निजाम्बामेव पृच्छ ।

द्वितीयस्वरः यद्यम्बा न्न तया भणति मुखन्ते मडमडायिष्यामि । त्रोटयिष्यामि ते कुब्जदन्तान् !

प्रथमस्वरः ( साट्टहासम् ) गच्छ गच्छ रे दासीपुत्र ! पृच्छ तावत् ।

सूत्रधारः ( सकौतुकम् )

अये, नेपथ्येऽपि अयमेव विवादः प्रवर्तते ? तत्कोऽयं विषाभिषिक्त-दुर्वचोभिः साधुस्वभावमन्यं कमपि अधिक्षिपति ?

( सखेदम् )

सर्वथा धिगिमं दास्यभावम् !

कान्तारे हरिणोऽपि जीवति सुखं दूर्वाङ्कुरैः प्रत्यहं
कासारे ननु कच्छपोऽपि तनुते मोदं ह्यनातङ्कितः ।
स्वाधीने निजजीविते भुवि न किं सौख्यं भवेत्प्राणिनो
नो कार्तस्वरपञ्जरेऽपि विहगो लीलां विधत्ते पुनः ॥३॥

( पुनरपि नेपथ्ये स एव विवादध्वनिः श्रूयते )

सूत्रधारः हन्त भोः आश्चर्यम् । पुनरपि स एव विवादः आकर्ण्यते मया !

( किञ्चित्स्मृत्वेव )

भोः पारिषदाः ! साम्प्रतं ज्ञातम्मया । एष खलु विनतानन्दनः सुपर्णो मातुर्दास्यभावेन खलीक्रियते दुर्वचोभिर्नागैः ।

( किञ्चित्पदमग्रेसरीभूय तारस्वरेण )

तद् भवन्तोऽपि सर्वेऽवहितास्तिष्ठन्तु । सम्प्रति प्रवृत्तमेतत् अभिराज-राजेन्द्रमिश्रविरचितं दास्यापनोदनं नाम एकाङ्किरूपकम् । प्रयाग-विश्वविद्यालयीयसंस्कृतविभागे प्रवक्तृपदमलङ्कुर्वाणोऽयं कविः केषां रुचिकरो न भविष्यति ? पश्यन्तु,

वीणापाणिकराम्बुजप्रणयिनी यत्कारयित्री मतिः
वृद्धिं पार्वणचन्द्रिकेव शनकैर्यान्ती तनोति क्षणम् ।
हिन्दीसंस्कृतलौकिकप्रचलिते काव्ये प्रतिष्ठापदं
सम्प्राप्तो जयतादयं कवयिता मध्येसभं साम्प्रतम् ॥४॥

( इति मन्दं निष्क्रान्तः )

( इति प्रस्तावना )

## प्रथमं दृश्यम्

( ततः प्रविशति गृहकार्यव्यापृतमानसा मलिनवेषा वेपथुमती विनता सुपर्णेन अनुगम्यमाना )

सुपर्णः ( साङ्गुलिग्राहम् ) ब्रूहि रे अम्ब ! किं त्वमसि दासी ?

विनता — जात ! न खलु । किमर्थमेवं पृच्छसि ?

सुपर्णः — ( समानरोषम् ) अलीकं भणसि । सत्यमद्यैव ज्ञास्यामि । अम्ब ! कथय ।

विनता — ( साश्रुनयना स्वगतम् )
मन्येऽद्य दारकः केनापि नागापसदेनाधिक्षिप्तः । तस्मादेव जातनिर्बन्धो दृश्यते । भवतु, एवमेनं तोषयामि ।
( प्रकाशम् )
सुपर्ण ! वत्सक !! कथितम्मया । न कस्यापि दासी तव जननी ।

सुपर्णः — ( सक्रोधम् )
मत्तोऽपि वारयसि । अम्ब ! किञ्चित् हृदये कृत्वाऽऽन्यथा मन्त्रयसे । एष नाहं पुत्रकस्तव न च त्वं जननी मम ।

विनता — ( अश्रूणि प्रमृज्य, गाढीभूय ) वत्स, सुपर्ण !!

सुपर्णः — अलमेतावता मिथ्यासम्बोधनेन । नागास्तावन्मां दासीपुत्रं प्रख्याप्य नितरामुपहसन्ति । त्वं पुनः ( इत्यर्धोक्ते )

विनता — ( भावं परिवर्त्य सरोषम् )
निसर्गादेव गरलमुखास्ते खण्डितवृत्ताः । सर्वथा प्रवञ्चनमाश्रित्य तैः छलितास्मि । ( स्मृतिमभिनीय स्वगतम् )
अये सहजरोषवशात् सत्यमुद्घाटितम्मया । श्रुत्वा सुपर्णो न जाने किं वक्ष्यति ?

सुपर्णः — ( सोल्लुण्ठम् ) अम्ब ! एषाऽऽत्मवचनेनैव निगृहीतासि । भण साम्प्रतं कैः कथं किमर्थं वा छलिताऽसि ?

विनता — (स्वगतम्) का गतिः ? इदानीं सुपर्णाद् रहस्यं गोपयितुं नोचितम् । एवमेनं भणिष्यामि ।
( प्रकाशम् ) जात, एकदाऽहं नागजननी कद्रूश्च ते विमाता विलासवनिकायां बद्धस्निग्धालापे विहरन्त्यावभवाव ।

सुपर्णः — ( सोत्कण्ठम् )
अम्ब ! अवहितोऽस्मि । ततः किमभूत् ?

विनता — वत्स ! तावदेव,

विलोक्य बिम्बं जलधौ पतन्तं प्रचण्डरोषारुणकान्तकायः ।
दिवाकरोऽदृश्यत पक्षिलोकैः कृतावमानोऽविरतं हसद्भिः ।।५।।

सुपर्णः अम्ब ! ततस्ततः ?

विनता जात ! तदा सहसाऽविचिन्तितमेव सपत्न्या कद्र्वा पृष्टं सखि विनते ! जानासि भगवतो मरीचिमालिनस्सप्ताश्वानां वर्णम् ?

सुपर्णः मातः ! किं त्वया भणितं तदा ?

विनता जात ! निखिलचराचरसृष्टिनिर्माणक्षमस्य ते पितुर्महर्षिकश्यपस्यैव सेवाप्रसादादधिगतसकलज्ञानविज्ञानाऽहं हस्तामलकमिव मन्यमानेदं वृत्तं तत्क्षणमेवाकथयं श्वेतवर्णाः दिवस्पतेरश्वा इति ।

सुपर्णः ( सोत्साहम् )
अवितथं त्वयोक्तमम्ब ! विमात्रा तावत्किं भणितम् ?

विनता वत्स ! निसर्गादेव मत्सौभाग्यमसहमानया तया कृष्णवर्णा इत्युक्तम् ।

सुपर्णः सर्वथा न युज्यते । धवलधवला एव वर्तन्ते रविवाजिनः ।

विनता विवादस्तावद् वृद्धिङ्गतः । मया प्रदत्तानि सर्वाण्येवाप्तजनप्रमाणानि कद्र्वा निरस्तानि । अन्ते च जातरोषया तया पणबन्धो विहितः ।

सुपर्णः कीदृशः पणः ? अम्ब ! न खल्ववगच्छामि ।

विनता वत्स ! तयोक्तम्,

यदि रविहयवर्णः पाण्डुतामेति भद्रे !
तव चरणसपर्यां जीवनान्तं विधास्ये ।
गतवति ननु वृत्ते वैपरीत्यं परन्तु
त्वमपि मम निदेशे मृत्युपर्यन्तमेषि ॥६॥

सुपर्णः हन्त भोः ! अज्ञानोपहता नागजनन्याः बुद्धिः । अम्ब ! किं कृतं त्वया ?

विनता ( दीनदीना विलपन्ती )
जात ! स्वकीयेनैव सत्येन छलिताऽहम् । पुत्रमुखेभ्यो रविहयानां श्वेतवर्णतां विज्ञाय भाविपरिभवभयाद् वेपमानया कद्र्वा भृशमथिताः नागाः स्ववचनरक्षायै । ततश्च,

मध्याह्ने व्योम्नि नीले दिनमणितुरगाः यावदेवागतास्ते
कद्रूपुत्रैरकस्मादुपचिततनुकाः कृष्णवर्णाः बभूवुः ।

सुपर्णः ( सक्रोधम् )
अरे रे भाग्यहतकाः कद्रूपुत्राः ! पापमाश्रित्य मुधा गर्जथ ? विज्ञातं मया युष्माकं प्रभुत्वमिदानीम् ।

विनता (प्रह्वीभूय सस्नेहम्)

सन्दश्यश्विान् प्रहृष्टा विषधरजननी साट्टहासं भणन्ती
दासी दासीति मोदं छलद्दुरितकृतं मे प्रभुत्वं गतेत्थम् ॥७॥

(इति करुणं विलपति)

सुपर्णः (भैरवाकृतिं नाटयन् आकाशे लक्ष्यं बद्ध्वा)
अरे रे नीचाधमाः कद्रूपुत्रकाः ! एतदेव युष्माकं प्रभुत्वरहस्यम् ?
पापाः पश्याम्यहम् ? योऽहं वैनतेयः

प्रभञ्जनगतिस्फुरद्द्वितयपक्षतिस्तम्भित-
क्षमाभृदिह दानवैस्त्रिदशकैश्च गीयेऽनिशम् ।
प्रवञ्चनपरायणैर्विहितकल्मषं निर्घृणं
तृणप्रकृतिडुण्डुभैः कथमहो निकारं सहे ॥८॥

(द्रुतगत्या धावन्) एष आगतोऽस्मि !

(इति सम्भ्रमं निष्क्रान्तः)

विनता (तारस्वरेण क्रोशन्ती)
जात, सुपर्ण! मा खल्वात्मानं विपत्पङ्के निपातय !
(सुपर्णं निष्क्रान्तं दृष्ट्वा)
कथमश्रुत्वैव मां गतो मे दारकः ! हा विधे, एषा मन्दभाग्याऽहं हतास्मि । भगवन् ! त्रिलोकरक्षिन् !! पुत्रकम्मेऽप्रतिहतं कुरु ।
शिवास्तस्य पन्थानस्सन्तु ।
(द्रुतविलम्बितं निष्क्रान्ता)

(इति प्रथमं दृश्यम्)

जवनिकापातः

## द्वितीयं दृश्यम्

(देवलोकस्थिता पुरन्दरपुरी अमरावती। चञ्चत्पताकानि समुन्नतगोपुराणि गगनचुम्बीनि भवनानि दृश्यन्ते। एकतस्तावन्नन्दनवनपारिजातादिविभवलसितो वैजयन्तप्रासादः। सर्वत्रैव सुरपुरोचिताऽमन्दानन्दसन्दोहसंवलिता वासन्तीसुषमा सुखसम्पत्तिश्च राराज्येते।

अकस्मादेव कोलाहलध्वनिः श्रूयते। नन्दनोपवने कापि शचीसेविका पूजा-पुष्पाणि चिनुते यावदन्या कापि ससम्भ्रमं सोद्वेगं समायान्ती दृश्यते)

(द्रुतमुपसृत्य)

सारिके, सारिके! अलमेतावद्भिः प्रसूनैः। एहि राजसदनं गच्छावः।

सारिका ( विहस्य )

मल्लिके ! किमेवं भणसि ? संत्रस्तेव परिलक्ष्यसे ?

मल्लिका हञ्जे ! पश्चाद्भणिष्यामि । सत्यमेव संत्रस्ताऽस्मि । न केवलमहमुताहो निखिलोऽपि देवलोकस्सन्त्रस्तः ।

सारिका ( भयं नाटयन्ती )

सखि ! स्फुटं कथय ? किं दानवः कोऽप्याक्रमितुं प्रोत्सहते ?

मल्लिका ( सकण्ठबाधम् )

न खलु दानवः कोऽपि ।

सारिका तत्कोऽपरः ?

मल्लिका ( सक्रोधम् )

राक्षसि ! अत्रैव तिष्ठ । भण वारं वारं पारिजातकमेव कोऽपरः कोऽपर इति । गृहीतकेशापि वाचालतां नो विजहासि । एषा गताऽऽहम् ।

( नेपथ्ये श्रूयते )

भो भोः देवलोकनिवासिनः ! अप्रमत्ताः भवत । अनर्थसम्पातोऽयं पुरन्दरपुरं विपन्नं करोति । एष खलु पक्षिराजो गरुडः मातुर्दास्यापनोदनाय पणीकृतजीवातुः भुजङ्गयाचितं पीयूषकुम्भं सबलात्कारं स्वायतीकर्तुम् आक्रामति ।

सारिका ( श्रुत्वा वेपमाना )

मल्लिके, मल्लिके ! तिष्ठ तावत् । एषाऽऽगताहम् ।

( पुनश्श्रूयते )

पादाघातैश्चलितसलिला भूरिरिङ्गत्तरङ्गा
स्वर्गङ्गेयं धवलधवलैर्भाति डिण्डीरखण्डैः ।
नाम श्रुत्वा प्रगुणितभिया वैजयन्तो जयन्तो
वर्तते नो कुशलपरिधौ सोऽवतीर्णस्सुपर्णः ॥९॥

भो भोः आदित्यप्रमुखाः वृन्दारकाः सन्नद्धाः भवतात्मरक्षायै । एष खलु प्रलयझञ्झावेगात्, आक्रममाणो विनतानन्दनस्सुपर्णः प्रखरतरचञ्चुचञ्च्वप्रायुधेन देवसैन्यं विदलन् पुरुहूतभवनाभ्यर्णंचरस्सन्दृश्यते ।

( नेपथ्ये कोलाहलध्वनिः घातप्रतिघातशब्दश्चीत्कारश्च प्रवर्धन्ते )

पुरन्दरः (मत्तमतङ्गजारूढो हस्ते वज्रं निधाय)
अरे रे विहगापसद कुलपांसन ! न जानासि मे देवराजस्य बाहु-पराक्रमम् ।

सुपर्णः (साट्टहासम्)
अलमात्मानं प्रख्याप्य ! अदितिबटो ! समरभूमावेव सम्प्रति पराक्रमं तव पश्यामि ।

पुरन्दरः वाचाट ! केन बलेन प्रमाद्यसि ?

न चासि वृत्रो नमुचिर्बलो वा न चापि मायानिपुणः पुलोमा ।
पणिर्नवा त्वं न च तारकोऽसि प्लवङ्गमीभूय खमेव धत्से ॥१०॥

सुपर्णः मूढ ! शतक्रतो !! किमेवं वृथा प्रलपसि । मच्चञ्चुविपाटितास्ते पक्षधराः सैनिकाः मृतप्रायाः अवसीदन्ति । एषोऽहम्,

पृतनामेव नश्यामि पश्यतस्तव सम्मुखम् ।
अशनिं मुञ्च शक्तिं वा यदि शक्तोऽसि रक्षितुम् ॥११॥

पुरन्दरः (क्रोधवेगं नाटयन् साट्टहासम्)
अहो दर्पः ! वैधेय वैनतेय, त्वं पुनर्वासवमपि मां विहगीकरोषि ? मूर्ख ! पश्य तावत्

युद्धस्थलेषु मदमत्तगजाधिरूढो
दम्भोलिलालितकरोऽल्पकहुङ्कृतेन ।
(इत्यर्धोक्त एव)

सुपर्णः (सोल्लुण्ठम्)
गेहेनर्दिन् अलमात्मसंस्तवनेन । एषोऽहं पूरयामि ते युद्धप्रशस्तिम् ।

श्रुत्वैव शत्रुबलमाशु शचीनिवासं
संयाति मानसजलं भृगुनन्दनं वा ॥१२॥

पुरन्दरः (अधिक्षेपमनुभूय स्वगतम्)
ननु मत्पूर्वपराजयं युद्धभूमिपलायनञ्च निर्दिशति दुष्टोऽयं विहगः ।
(प्रकाशम्)
मूढ विहग ! मिथ्याप्रलापिन् !! बहु विजल्पितं त्वया । साम्प्रतं पश्य पुरुहूतपौरुषम् ।
(वज्रमनुसन्धाय)

एष न भवसि । रक्षात्मानम् इदानीम् ।
( इति क्षिपति )

सुपर्णः ( आकाशे समुत्प्लुत्य समापतन्तं वज्रं चञ्चुप्रहारेण खलीकृत्य, साट्टहासम् )
महावीर शचीप्रणयिन् ! वर्तते किमप्यपरं कौशलम् ? मूढ ! वृत्रासुरविनाशाय प्रभवतीदं दिव्यायुधन्ते न पुनर्मम वैनतेयस्य विमानाय ।

पुरन्दरः ( उद्योगवैयर्थ्यं नाटयन् )
आश्चर्यं दुर्धर्षामोघविक्रमं वज्रमपि न प्राभवत् । साम्प्रतं किं कर्तुं युज्यते ?

सुपर्णः ( साट्टहासम् )
विबुधेश ! दधीच्यस्थिनिर्मितत्वाद् वज्रप्रहृतोऽहमेष लघुपक्षतिं मुञ्चामि । अन्यथाऽऽवमाननं तत्रभवतो भवेत् ।
( इति लघुपत्रखण्डं विमुञ्चति )
( नेपथ्येऽनुश्रूयते )

भो भोः वृन्दारकेश ! प्रशमय विनतानन्दन ! त्वञ्च युद्धं
त्रैलोक्यं याति तापं कुशलमुषि वृते संयुगेऽस्मिन्कराले !
एषोऽहं प्रार्थयामि त्रिभुवनरचनो लोकभव्यैकदृष्ट्या
निश्चेतुं नैव शक्यं कथमपि युवयोः कोऽधरः को महीयान् ॥१३॥

पुरन्दरः ( सविस्मयम् विलोक्यान्तरिक्षम् )
अये युद्धनिवारणाय समुपस्थितः साक्षाद्भगवान् पद्मयोनिः !
( प्रकाशम् )
प्रभो त्रिभुवनैकगुरो ! एष निवृत्तोऽस्मि युद्धात् ।
( पुनर्नेपथ्ये )
वत्स विनतानन्दन ! त्वमपि निवर्तयात्मानम् ।

सुपर्णः ( सविनयम् )
तात ! पितामहचरण !! गरीयसी ते आज्ञा प्राणेभ्योऽपि । एष आत्मानं विनिवारयामि ।
( पुनर्नेपथ्ये )
शतक्रतो ! नारायणवाहनोऽयं पक्षिराजो गरुडो न त्वया न्यक्करणीयः । प्रसादयैनं पीयूषकुम्भं समुपायनीकृत्य । मया पुनरीदृशं

विधानं कृतं येन सुपर्णमातुः दास्यभावमपि नङ्क्ष्यति दुर्मतिभिर्नागैरमृतमपि नोपलप्स्यते । एष मत्प्रेषितो नारदस्ते कथयिष्यत्युपायविधिम् ।

पुरन्दरः ( सविनयम् )
यथाह भगवान् विरिञ्चिः ।
( नारदोऽवतीर्य समुपसृत्य च देवेन्द्रकर्णे किञ्चिन्मंत्रयते द्रुतमेवापसरति च )

पुरन्दरः ( पीयूषकुम्भं हस्तयोर्निधाय सस्नेहम् )
भद्र ! कश्यपनन्दन ! मदुपकारिन् !! गृहाण मदुपायनमिदम् ।

सुधाकुम्भमिमं दत्वा मातरं विशदां कुरु ।
यदिच्छामि शुभं भूयाद्भूयाद्दास्यापनोदनम् ।।१४।।

सुपर्णः ( लज्जां नाटयन् )
सुरपते ! मुहुर्व्रीडितोऽस्मि । अस्थाने विक्रान्तम्मया, तत्कृतापराधः क्षन्तव्योऽस्मि । जनन्याः दास्यभावापनोदनाय नागान् सुधाकुम्भदानेन परितोषयितुं कृतप्रतिज्ञेन मया क्लेशितोऽत्रभवान् ।

न गर्वितस्स्वार्थगतो न वैरितो न युद्धलिप्सुर्न च रोषकर्षितः ।
असह्यधात्रीपरिभूतिभर्त्सितस्त्वया सहाजौ समुपागतोऽस्म्यहम् ।।१५

( इति सादरं पीयूषघटं गृह्णाति )

पुरन्दरः तात सुपर्ण ! स्वभावादेव सृष्टिसन्तापदायका अकारणवैरिणः इमे सर्पाः अमृतं निपीय साक्षात् कालरूपा एव भविष्यन्ति । अतएव तथाऽऽचरितव्यमावाभ्यां यथा प्रतिज्ञाऽपि ते पूरिता भवेत् सुधाकुम्भोऽपि कद्रूपुत्रकैर्न कथञ्चित् प्राप्येत । त्वं तावदेवं कुरु ।
( कर्णे एवमिव )

सुपर्णः ( सादरम् )
यथादिशति भवान् । अमृतं समर्प्य मातुर्दास्यापनोदनमेव मल्लक्ष्यम् । अमृतापहरणं तावच्चिन्तयतु भवान् ।

पुरन्दरः अहमप्यागतोऽस्म्यनुपदमेव । त्वत्तोऽमृतमवाप्य यावदेव नागाः प्रमत्ताः भवन्ति स्वकीयेन इन्द्रजालेन तावदेव सम्मोह्य तान् सुधाकुम्भम् अपहरामि ।

सुपर्णः सुचिन्तितं भवता ।

पुरन्दरः वत्स वैनतेय ! कामऽयेहं यत्

त्वं नारायणवाहनोऽसि नितरां तत्रास्तु भक्तिस्तव
क्लेशौघक्षयकारिणी मतिमतां शश्वद्धृदुल्लासिनी ।
त्वं धात्र्येकवशंवदोऽसि नितरां तत्रास्तु रक्तिस्तव
भ्रंशोद्वेगनिकारिणी विनयतां सर्वार्थसञ्जीवनी ।।१६।।

सुपर्णः (प्रह्वीभूय)

त्रिदशपते ! पुण्यसम्भारो मे कश्चिद् विजृम्भते सम्प्रति यद्भवान् मय्ययाचितं स्निह्यति ।

पुरन्दरः नैतावदेव ! अद्यप्रभृति,

यस्त्वां स्मरिष्यति नरो सहजं त्रिसन्ध्यं
यद्वा भये परिगते भुजगैरिते वा ।
तस्याहितं न तृणकं विदधत्यशिष्टाः
कद्रूसुताः सशपथं नियमं करोमि ।।१७।।

सुपर्णः देवराज ! परित्रातं भवता जगतीतलम् । तत्परित्राणकारणीभूतोऽयं स्वजनश्चापि भवता बहूपकृतः । मन्ये,

समीहते साधयितुं यदीश्वर-
स्तथाविधं कारणमाशु कल्पते ।
न कारणं क्वापि महीयते ततो-
ऽखिलं जगत्कार्यवशानुगं ध्रुवम् ।।१८।।

पुरन्दरः (समीपमुपसृत्य)

वत्स ! तव विनयवृत्त्या बलपौरुषाभ्याञ्च वशीकृतोऽयमिन्द्रः पुनरपि किञ्चिद् दित्सति ।

सुपर्णः (सादरं कायं प्रणिधाय)

ननु समुदेति भाग्यभास्करो वैनतेयस्य ।

पुरन्दरः (दक्षिणं बाहुमुद्यम्य)

सुपर्ण ! अद्यतः खलु तवोड्डयनकाले त्वत्पक्षान्तरालात् सामगानध्वनिर्निस्सरिष्यति ।

सुपर्णः (साञ्जलिपुटं प्रणम्य)

याचकं महेश्वरीकरोति वृन्दारकेशः। सर्वथाऽनुगृहीतोऽस्मि ।

पुरन्दरः भद्र सुपर्ण ! किन्ते भूयः प्रियमुपकरोमि ?

सुपर्णः साम्प्रतं किमन्यद्वर्तते मदुपकरणीयम् ?

सुधाकुम्भं दत्वा सरलमतिधात्री विषधरै-
र्विमुक्ताऽदासीत्वं विनतविनता सोपगमिता !
मघोनस्सायुज्यं मम च सुभटम्मन्यगरिमा
अहो किन्नोऽवाप्तं विहगबटुकेनाद्य युगपत् ॥१९॥

( प्रह्वीभूय सादरम् )

तथापीदमस्तु भरतवाक्यम्,

भूमेस्तुङ्गोऽऽस्तु वृक्षः फलभरनमितो राजगेहश्च तस्मात्
प्रासादाच्चापि तुङ्गं हरिहरभवनं स्यात्पताका ततोऽपि !
वात्याचक्रं ध्वजोच्चं प्रभवतु नितरां पर्वतश्चातितुङ्गः
आकाशं पर्वतोच्चं निखिलमनुभुवां क्ष्माभृदुच्चाऽस्तु धात्री ॥२०।

( सपुष्पवर्षं जवनिकापातः )

## पात्रपरिचयः

| | |
|---|---|
| नटी | ( सारिका, सूत्रधारप्रिया ) |
| जयन्तिका | ( प्रतीहारी ) |
| ऊर्वशी | ( देवसभानर्तकी प्रमुखाप्सराः ) |
| रम्भा | ( ऊर्वशीसहचरी ) |
| सूत्रधारः | ( प्रयोगप्रस्तावकः ) |
| देवेन्द्रः | ( देवराजोऽर्जुनस्य धर्मपिता ) |
| अर्जुनः | ( कौन्तेयो मध्यमपाण्डवः ) |
| मातलिः | ( देवेन्द्रसारथिः ) |

रचनाकालः मई-जून १९७८ ई० ।

( नेपथ्यगृहे सङ्गीतकं प्रवर्तमानं श्रूयते । क्रमेण च गीतवाद्यनर्तनध्वनिरुपचीयते । सर्वतोऽपि निर्मक्षिकं गाम्भीर्यं समुज्जृम्भते । जवनिकाभ्यन्तराले नान्दीपाठः प्रस्तूयते )

त्रैलोक्यस्फुटनिर्वृतिं विदधते यस्य स्मितं केवलं
प्राकाश्यं गमयत्यहो त्रिभुवनं यन्नेत्रविद्युच्छटा ।
यच्चैतन्यमथोल्बणं वितनुते लोकं स्फुरच्चेतनं
पायाद् वो व्रजबल्लवीशकटिकाक्रीडी मुकुन्दश्चिरम् ॥१॥

अपि च

प्राणेशं परिरम्भणैककृपणं स्तन्योत्सुकं वा शिशुं
अर्धक्लृप्तमहानसं नु शयनं तल्पीभवत्तुष्पकम् ।
द्वारेष्वर्गलितेष्वपि व्युपगताश्चञ्चद्गवाक्षच्युताः
गोप्यो यं शिशुमाधवं सरभसं पायात्स योगेश्वरः ॥२॥

( नान्द्यन्ते ततः प्रविशति गृहीतपुष्पाञ्जलिकः सूत्रधारः । सजिज्ञासं सस्मितम् इतस्ततो निरीक्ष्य सश्रद्धं पुष्पाणि विशीर्य च )

मान्यवर्याः सहृदयसामाजिकाः ! एषोऽहं कौशलमिश्रो धृतसूत्रधारभूमिको भवद्भ्यः सर्वेभ्यः स्वकीयां विनीतनतिततिं समुपायनीकरोमि ।

( नेपथ्याभिमुखं विलोक्य )

एषा च मे सहाध्यायिनी सखी सारिका नाट्यप्रयोगेऽस्मिन् मद्गृहिणीपदमुपगता समायाति भवतोऽभिनन्दितुम् ।

( छोटिकां दत्त्वाऽऽहूय सादरम् )

सारिके ! मत्पार्श्वमायाहि तावत् ।

( मध्येमञ्चमुपगम्य सहृदयजनानभिवाद्य च सस्नेहम् )

नटी आर्य ! किम्मामनवसरमाहूतवान्, न पश्यति भवान् मम वैक्लव्यम् ?

पट्टभारसमाक्रान्तो भेक एव हि केवलम्[1] ।
अनुभूय विजानाति क्वासौ वपुषि पीड्यते ॥३॥

---

१. Only the toad under the harrow knows, where it pinches him.

सूत्रधारः (सहासम्) गृहदेवते ! कथमद्य त्वयाऽहं सर्वजनसमक्षम् एवमधिक्षिप्ये ? न च मया ते किमप्यत्याहितम् ।

नटी आर्य ! न मां नर्मपात्रीकर्तुमर्हति भवान् । आत्मकृच्छ्रं निवेदितम्मया । अलमन्यथा सम्भाव्य ।

सूत्रधारः प्रिये ! तत् किमिति भेकीकृत्यात्मनं प्रस्तौषि । कोऽसौ पट्टभारः येन समाक्रान्ता त्वमिति ज्ञातुमिच्छामि ।

नटी ननु विस्मृतिपरायणो भवान् किन्न जानाति, यदद्यैव वत्सको मम राजर्षिः स्वविद्यालयसमायोजितायां पदकन्दुकप्रतियोगितायां[1] विजयश्रियमवाप्य प्रथमस्थानञ्चोपलभ्य गृहमागतः । तदभिनन्दनार्थं मया त्यक्तसर्वस्वं प्रयत्यते ।

सूत्रधारः (सस्नेहम्)
सारिके ! सत्यं विस्मृतोऽस्मि । किं करवाणि, नवनवाभिनेयलालसेयं बलवती मां प्रमद्योत्पथीकरोति । स्वयमेवादिष्टं पुत्राभिनन्दनसंविधानकं विस्मृत्य सहृदयमनोरञ्जनाय एषोऽग्रिमञ्चं तिष्ठामि । ननु आश्चर्यमेव !

नटी आर्य ! क्वचिद् दुष्यन्त इव सभरतां शकुन्तलां मामपि न विस्मरतु भवानिति बिभेमि !

सूत्रधारः (साट्टहासं सहृदयाभिमुखीभूय)
गूढे ! अस्मादेव कारणात् स्वनामाङ्किता मुद्रिका मया किञ्चिल्लघ्वी निर्मापिता । पश्य कियद्दृढमारूढा तेऽनामिकायाम् ।

नटी (सानुरागं सव्रीडञ्च)
परिहासकुशलो भवान् । अलमेतावतैव । आदिशतु भवान् किम्मयाऽनुष्ठातव्यमत्र ?

सूत्रधारः प्रिये ! यद्युत्सहसे तद्ब्रवीमि ! ममापि कार्यं त्वत्कार्यसंवादि !

नटी (भ्रान्तिं नाटयन्ती)
आर्य ! न खल्ववगच्छामि । स्फुटमाज्ञापयतु कस्मिन् खलूपक्रमे मया सहगामिन्या भवितव्यम् ?

सूत्रधारः सुन्दरि ! त्वन्नवीकृतचेतनोऽयमहं स्फुटं भणामि । पश्य यथा त्वं शचीव स्वकीयं विजयिनं पुत्रं राजर्षिमत्राभिनन्दितुं प्रवृत्तासि तथैवाहमपि पुरन्दरीभूय विनिहतनिवातकवचकालिकेयदैत्यप्रमुखं स्वकीयं विजयिनं पुत्रमर्जुनं मध्येशालमभिनन्दितुमुत्सहे ।

---

१. Football Match

नटी (विहस्य सशिरःकम्पम्)

एष गृहीतोऽस्ति भवान् साम्प्रतम्। आर्य! अलमिदानीं प्रहेलिकाभिः। स्पष्टं किन्न भणति भवान् यदद्याऽस्मिन् नाट्यसमारोहे अभिराजराजेन्द्रविरचितेन अर्जुनोर्वशीयनामधेयेन एकाङ्किरूपकेण सहृदयान् प्रसादयितुमिच्छति भवान्!

सूत्रधारः (सस्मितम्)

देवि! धीमतां कृते तु सङ्केत एव प्रभवति।

नटी आर्य! यद्येवं तर्हि किमिति विलम्ब्यते। अभिधानमात्रेणैव भवता शचीकृताऽस्मि। साम्प्रतं कृतदेव्युचितवेषविन्यासाऽवितथमेव शचीव परिस्फुरन्ती भवता लक्षिष्ये!

(इति सविलासमपक्रामति)

सूत्रधारः (प्रियावियोगमभिनीय)

गता मे सर्वकालसहचरी! भवतु, प्रकृतिमनुसरामि तावत्।

(अग्रतोऽवलोक्य, परिक्रम्य च)

भो भोः सुरगवीसमर्चकाःसहृदयाः सामाजिकाः! साम्प्रतं प्रस्तूयते मया भवन्मनोरञ्जनाय श्रीमदभिराजराजेन्द्रविरचितं नूतनमेकाङ्कम् अर्जुनोर्वशीयं नाम। श्रीमन्तः,

यं रागामृतनिर्झरं वृतवती सारस्वती कच्छपी
श्रीहर्षश्च ततान यत्सुरुचिरं काव्यं नु मामल्लजः।
तद्रागामृत-काव्य-कुम्भ-विलसज्जीवातुचञ्चत्तनुः,
भूयाद्वो नुतयेऽभिराजपदभाग्राजेन्द्रमिश्रोऽनघः ॥४॥

अपि च

वज्रादप्यधिकं नृशंसमशुभं चित्तङ्कषं प्रेरितम्,
येनात्मप्रतिरक्षणाय सततं वैरव्रतानां स्वयम्।
ईर्ष्यामर्षपरायणं दुरितजं कृत्यं शतम् मर्षितम्,
तस्यैव त्वभिनीयते सुयशसो नाट्यं मया सुन्दरम् ॥५॥

(नेपथ्यगृहात् सङ्गीतकध्वनिः स्फारीभवति)

मदनो भाति पुरन्दर-वेषः !!

रतिरिव भाति शची पौलोमी

जयति जयति विबुधेशः !!

नृत्यति रम्भा नूपुरपूनम्,

प्रीतिमुपैति निवेशः !!

( सोत्कण्ठं श्रुतिमभिनीय रङ्गशालाभिमुखीभूय )

अये ताल-लयाश्रित-रागपरीवाहिणा स्वरेण पुरुहूतपौरुषमभिलक्ष्य यदिदं कोमलकान्तपदसंवलितगीतं गीयते देवनितम्बिनीभिस्तेन सिद्ध्यति यत्समुपपन्न एव पार्थाभिनन्दनसमारोहसम्भारः। तदहमपि तावत्पुरन्दरीभवितुं नेपथ्यगृहं प्रविशामि।

( इत्यपक्रामति इति प्रस्तावना )

## प्रथमं दृश्यम्

( ततः प्रविशति काञ्चनसिंहासनस्थो लसद्विग्रहः पुरन्दरः सपरीवारः। पुरन्दरसभायामेकतो वरुण-कुवेर-प्रमुखाः देवास्तिष्ठन्त्यपरतश्च चित्ररथादि-गन्धर्वाः ऊर्वशी-प्रमुखाः अप्सरसश्च। उत्तरदिग्वर्तिषु मृगचर्ममण्डितासनेषु नारद-प्रभृतयो देवर्षयोऽपि राराज्यन्ते। निखिलमपि देवास्थानमण्डपं मृगमदचन्दन-पारिजातागुरुगन्धैस्सुवासितं वर्तते। सङ्गीतकं प्रस्फुरति। )

नन्दनवनपरिमललसदङ्गा

मरुताऽऽनीयतइहसुरगङ्गा

रुचिरोऽयं परिवेषः ॥६॥

देवेन्द्रः ( सरणरणकम् )

तुम्बुरो ! साधु गीतं त्वया गायन्तीभिश्च ! रम्भे ! तवापि नृत्यमङ्गीकृतलास्यं वरीवर्ति। भद्रे ! सर्वथा परितुष्टोऽस्मि त्वन्नृत्यवैशारद्या ! एतद्भवतु युष्माकं पुरस्कारः।

( इति मणिबन्धात् रत्नवलयानि निस्सार्य प्रयच्छति। तुम्बुरुः रम्भाऽन्याः देवाङ्गनाश्च पारितोषिकं सविनयं गृह्णन्ति )।

जयन्तिके ! सम्प्रति मद्वचनादुच्यतां मातलियदर्जुनं सादरमुपनयेति।

जयन्तिका यद्भर्ताऽऽज्ञापयति।

  

(इतिनिष्क्रान्ता । पुनश्चमातलिनाधिष्ठितेनार्जुनेन सह प्रविष्टा)।

जयन्तिका ( सादरं निर्दिश्य )

वीर ! एष देवेश्वरोऽस्माकं भर्ता भवन्तमेव स्नेहानुपूरितचक्षुर्भ्यां निर्निमेषं विलोकयन् सन्तिष्ठते। प्रसादयतु भवान् ।

अर्जुनः ( प्रेम्णा गादीभूय पुरन्दरचरणयोर्निपत्य )

तात पितृचरण ! भवद्वंशजातः कौन्तेयोऽयं प्रणमति ।

देवेन्द्रः ( निर्दयमाश्लिष्य )

वत्स अर्जुन ! चिरञ्जीव ! शतञ्जीव, युगञ्जीव, पुत्रक ! अद्याऽहं जयन्तेन त्वया चोपपन्नो भाग्यवत्तमं मन्ये त्रिषु लोकेष्वात्मानम्! वत्स,

हत्वाऽऽजौ कालिकेयास्त्रिदशगतिहरान्नामशेषान्निवातान्,
यस्त्वं कौन्तेय ! कृत्वा नकुल इव बली पीनभोगान्भुजङ्गान् ।
अक्षुण्णं ह्यागतोऽसि प्रमुदितवदनः शान्तशान्तो नितान्तं
दर्शं दर्शं कृतात्मा तदिह दशशतं नेत्रकं व्यातनोमि ।।७।।

( इति मन्दारमालां कण्ठप्रदेशादवतार्यार्जुनस्य कण्ठमधिरोहयति)

अर्जुनः ( विनीतः कृताञ्जलिस्सन् )

तात ! तवैव विक्रमेणाभिमन्त्रितेन मया सर्वमेतत्कृतम् । न मे पार्थिवशौर्यं प्रभवति ।

देवेन्द्रः वत्स ! जनन्युचिता ते प्रियप्राया विनीतवृत्तिर्महीयते । सर्वथा त्रिभुवनेऽप्रतिरथो भविष्यसि । इयमेव मदाशीः । अयमेव तुभ्यम्मे वरः ।

अर्जुनः ( प्रह्वीभूय ) तात ! कृतार्थोऽस्मि ।

देवेन्द्रः ( स्थानं निर्दिश्य )

एहि वत्स ! अर्धासनम्मेऽधितिष्ठ ।

( अर्जुनः सविनयं तिष्ठति )

देवेन्द्रः मातले ! सम्प्रति मन्नियोगात् प्रवर्तन्तामर्जुनाभिनन्दनसमारोह-सम्भाराः । एते वयमवहिताः स्मः ।

मातलिः यदाज्ञापयति स्वामी ।

( इति नेपथ्यगृहं प्रविशति । क्षणानन्तरमेव तारस्वरेणोद्घोष्यते )

भोः भोः पारिषदाः अवहिताः भवत । साम्प्रतं देवाङ्गनोत्तमयोर्वश्या तत्सखीभिश्च निवातकवचकालिकेयविनाशाभिनयः प्रस्तूयते ।

ततः प्रविशति अर्जुनवेषधारिणी विहितयुद्धवेषोर्वशी मूकाभिनयं नाटयन्ती । इतरदिशातः प्रविशन्त्यन्या अप्सरसश्शितिवाससः कालिकेयसैन्यमनुकुर्वाणाः । ( युद्धोचितं संगीतकं प्रवर्तते )

खण्डय खण्डय चण्डि कपर्दिनि कालिकेयमस्तम्
छिन्धि छिन्धि ननु भञ्जय भञ्जय विकलयविश्वस्तम् !!
ज्वलय मन्दिरं शोषय वापीं प्रशमय सततगतिम्
दिशिदिशि पूरय शिखिनमुच्छिन्नं कीलय सकलभृतिम् !!
खं पततां पततां पृथिवीयं मार्तण्डः पतताम्
यदि च पतन्तां विधुबुधगुरवश्शनैश्चरः पतताम् !!
याहि याहि द्रुतमपसर कुरु कुरु दनुजापसद नुतिम् !
कौन्तेयोऽयं पाशुपतास्त्रैर्नयति दुरन्तगतिम् !!८॥

( गीततालमाश्रित्य विविधकरणाङ्गहारं नाटयन्ती रौद्रोद्धतनृत्यञ्च प्रस्तुवन्ती श्रितताण्डवोर्वशी संलक्ष्यते )

रङ्गमञ्चोपरि संदृश्यते उल्कापातः । कर्णकर्कशचीत्कारध्वनिः मृत्युमूर्च्छाप्रलापो विद्रावणपलायनशब्दाश्च श्रूयन्ते । भैरवशस्त्रप्रहारान् नाटयन्ती उर्वशी पुनरपि प्रस्तौत्युद्धतनृत्यम् ( नेपथ्ये तुमुलाजिध्वनिः श्रूयते )

क्वासि कालिकेय हतक मूढ कृतकशूर !
पाण्डुनन्दनाद् बिभेषि कथं रे विमूढ !!
क्वासि भो निवातकवच ! दलितदेवलोक !
नोऽवगच्छसि प्रजान्ध ! क्लृप्तभूरिशोक !!
तिष्ठ तिष्ठ मलिम्लुच ! प्रमथ्नामि शान्त !
क्लान्त भवसि नैव मदिरघूर्णिताक्ष दान्त !! ९॥

( पार्थो निर्निमेष आलिखित इव मुषित इव हृतप्रभ इवोर्वशीं पश्यन् स्थितः । गीतध्वनिः परिवर्तते । नृत्यञ्चापि समधिकतरं भैरवं संल्लक्ष्यते )

देवेन्द्रः ( अर्जुनं सविशेषं परिलक्षमाणः आत्मगतम् )

अये नागरसीमन्तिनी-रूपमाधुरी-मथित-हृदयो ग्रामटिकाबटुक इव यदयं वत्सो मेऽभिभूतचेतनालेशं निपुणमवेक्षते वृन्दारकवधूटीमुर्वशीं तेन स्पष्टं विज्ञायतेऽस्यानुराग एतस्याम् । भवतु उपायं चिन्तयिष्याम्यनयोस्सङ्गमस्य ।

( सङ्गीतकं स्फारीभवति )

बाहू भिनत्ति चरणे छिनत्ति कृन्तति शिरश्च निशितम्
खड्गं निधाय पाणौ पिधाय कायं करोति पिशितम् !!
भैरवशिवोऽस्ति मरुतां गणोऽस्ति पार्थोऽस्ति वज्रपाणिः
हाहा हतोऽस्मि शरणागतोऽस्मि पार्थोऽस्ति मृत्युपाणिः !!१०।।

( पलायते कालिकेयसैन्यम् । व्यापन्नाश्च दृश्यन्ते नैके पिशिताशनाः ।

( पार्थवेषधारिणी देवसैन्यपरिगतोर्वशी विजयं नाटयति । नेपथ्ये चालोकशब्दः जयजयकारध्वनिश्च श्रूयते । जवनिका पतति । क्षणान्तरमेव मेनकारम्भादिपरिगतोर्वशी पुरन्दरसमीपमागत्य सविनयं स्थिता । ऊर्वशीमायान्तीं दृष्ट्वाऽर्जुनः शनकैरपक्रामति ।)

देवेन्द्रः (रोमाञ्चमनुभूय) सुन्दरि ! साध्वभिनीतं त्वया । न मे वाक्प्रसरति त्वन्नृत्यकलाप्रशंसने । पश्य,

कलयति यदि भानुः पद्मिनीनां प्रशंसां
प्रभवति न विशेषस्तेन तस्याः कदाचित् ।
विगलितयुगभावे प्रीतिबन्धे विरूढे
भवति हृदयमेव व्यक्तवाहो न जिह्वा !!११।।

ऊर्वशी ( जानुभ्यां प्रणिधाय साञ्जलिपुटम् )

देवेश्वर ! अलमनपेक्षितं सम्भाव्य ! भवद्भिः समुपायनीकृतप्रतिष्ठाः वयमप्सरसो वस्तुतः कृतार्थाः । न जानीमहे केन सेवाविधानेन प्रसादनीयाः भवन्तोऽस्माभिः !

देवेन्द्रः ( स्मितं नयनविकासञ्च नाटयन् )

ऊर्वशि ! गृहाण प्रथमं तावत्परितोषप्रतीकभूतं पारितोषिकं पश्चात् कथयिष्यामि ते विशिष्टमेकं सेवाविधानमपि !

( इति मणिमाणिक्यखचिते कुण्डले कर्णयोर्निस्सार्य प्रयच्छति )

ऊर्वशी ( स्मेरवदनाम्बुजा सानुरागं )

देवीं शचीमपृष्ट्वैव प्रयच्छति मे कुण्डलद्वयममरावतीश्वरः !

देवेन्द्रः ( अव्यक्तं विहस्य साकूतम् )

किन्तेन ?

रम्भा ( जनान्तिकम् )

ऊर्वशि ! भण तावत्किमपि शल्यभूतमधुरम् ।

ऊर्वशी ( सविलासमधरोष्ठं विकुञ्च्य )

सुरोत्तम ! यत्तेन भविष्यति तदधिशय्य रात्रावेव ज्ञास्यति भवान् ।

( सर्वा अप्यप्सरसः सकरतालं साट्टहासं पुरन्दरं व्यङ्ग्यैः पीडयन्ति )

देवेन्द्रः ( वैलक्ष्यं नाटयन् )

अयि भोः साम्प्रतं जितं युष्माभिः । शचीविक्रमं रात्रौ प्रेक्षिष्ये ! ऊर्वशि, त्वयाप्यद्य रात्रौ कस्यचित् प्रसूनवन्नावतारस्य विक्रमः प्रेक्षणीयः ।

ऊर्वशी ( सकोपम् )

विबुधेश ! कथमिदानीं भवताऽनाद्रिये !

देवेन्द्रः सुन्दरि ! न भवतीं खञ्जीकरोमि । एष कर्णयोरेव तव भणिष्यामि । मुहूर्त्तमात्रमितस्तावत् ।

( ऊर्वशी पुरन्दरसमीपमागच्छति । स च कर्णयोः भणति एवमिव)

ऊर्वशी ( पुलकमनुभवन्ती )

यदाज्ञापयति स्वामी । साम्प्रतं भवदनुज्ञाताः जिगमिषामो वयम् ।

देवेन्द्रः ( सस्नेहम् )

सुन्दरि गच्छ ! शुभरात्रिस्ते भूयात् ।

( अप्सरसो बद्धालापाः सविलासमपक्रामन्ति )

देवेन्द्रः ( एकाकिनमनुभूयात्मानम् )

अहो विनयः कुन्तीनन्दनस्य ! ऊर्वशीं मत्सविधिमायान्तीं दृष्ट्वैव जनकोचितसम्मानप्रदर्शनवशात् स्वयमेवापक्रान्तः। सम्प्रत्यहमपि विगतचिन्तोऽस्मि ऊर्वशीं सम्प्रेष्य तत्सेवायाम्। यद्यपि मयोपभुक्ता सा मत्सुतोपभोगौचित्यं नार्हति, तथापि न कोऽपि दोषोऽस्मिन्। अप्सरसस्तु विधातुः वरप्रभावेण सर्वभोग्याः सत्योऽपि व्यभिचार-वचनीयतां नोपयान्ति।

( जृम्भां नाटयन् छोटिकां वादयन् )

वत्स अर्जुन !

एषा ते शुभरात्रिर्भवतु मनोज्ञा प्रियाङ्कसुखदात्री।
सुरपुरवसतिसुखानां पात्रं भव कौन्तेय ! निशीथे !!१२॥

( इत्येवं शचीमन्दिरं प्रतिष्ठते )

## द्वितीयं दृश्यम्

( पुरन्दरस्य वैजयन्तप्रासादे अर्जुनस्य निवासकक्षः। चलत्पारिजातफला-शान्तरगोचराश्चन्द्रमरीचयो गवाक्षरन्ध्रैस्समाविशन्ति कक्षे। भवनभित्तिप्रत्युप्ताः मणिमाणिक्येन्द्रनीलवैदूर्य-पद्मरागादिमणयः विविधच्छटां किरन्तस्संल्लक्ष्यन्ते। मध्येशालमधिशय्यं शयानोऽर्जुनः स्मृतिशून्यतां नाटयन् भवनच्छदिं विलोकयते )

अर्जुनः ( सामोदम् )

नृत्यमपि नाम चित्तहरणक्षमं कलारत्नम् ! यत्सत्यम्,

क्वचित्तारं रौति द्रुतजघनकाञ्ची कलरुतः।
झणत्कारं सूते क्वचिदपि च मञ्जीरयुगलम्।
गलत्केयूराणां भवति मणिबन्धोऽधिकरणं.
न के लास्ये दास्यं विबुधरमणीनां विदधति !१३॥

( स्मृतिमभिनीय, सरणरणकम् )

धन्यासि ऊर्वशि धन्यासि ! प्राप्तं मयाऽर्जुनेन नयनयोः पुण्यफलम् ! मर्त्येणापि सता यन्मयाऽवेक्षिताऽमरावती ततोऽप्यधिकं त्वन्नृत्य-कलासन्दर्शनमात्रैणैव समवाप्तम्मया !

( दीर्घं निःश्वस्य )

अनिन्द्य-सुन्दरि !अयमहं मध्यमपाण्डवो भवतीं सभाजयामि,

अङ्गानि त्वतिशेरते सुरतरोश्चञ्चत्सुमानि ध्रुवं
हास्यं त्वद्वदनाम्बुजाग्रनिलयं ह्यत्येति शेफालिकाम् ।
चक्रीभूततटी कटी वितनुते यद्वेतसीवक्रतां
तेनैव प्रतिभासि भूरिविभवे ! त्वं लोकलोकाधिका !!१४।।

( ततः प्रविशति सखीभिरनुगम्यमाना अभिसारिकोचितवेषा ऊर्वशी )

ऊर्वशी ( सोत्कण्ठम् )

सखि रम्भे ! प्रत्यायितास्मि नाम देवेश्वरेण यत् कुन्तीनन्दनोऽर्जुनो मयि बलवत्स्निह्यति । तथापि साध्वसवशात् परिवेपिताऽस्मि । पश्य,

प्रभवति हि नितान्तं गूढगूढोऽनुरागः
विकलयति निशीथश्चापि दीप्यन्मृगाङ्कः ।
प्रबलतरमनङ्गं किन्न कान्तो विधत्ते
अहह सखि ! मयेदं प्राप्तमद्य त्रिरत्नम् !!१५।।

रम्भा ( साश्वासनम् )

सखि मोत्ताम्य ! समाश्वसिहि, समाश्वसिहि । कौन्तेयसङ्गम-सुखमवाप्य भयमेतत्तेऽनावृतधनसारतामेष्यति ।

ऊर्वशी ( सदैन्यम् )

हञ्जे, अपि नाम पुरुषरत्नं किरीटी अन्यान्यपुरुषदेवसहवासास्त-मितनारीसमयां मां हृत्तल्पस्थां कुर्यात् ।

रम्भा अयि आत्मलाघवभिदुरे ! कः खलु कुमुदक्षुपो निर्मुदिरां मुदीं नाभिनन्देत् ? त्वं पुनः ( इत्यर्धोक्त एव श्रुतिमभिनीय )

सखि ऊर्वशि ! किञ्चिदनावृतकपाटरन्ध्रादेषोऽव्यक्तध्वनिरिव श्रूयते । तदेहि मुहूर्तमात्रमितस्तावत् अवहिते श्रणुवः क एष व्याहरति ?

( उभे कवाटसमीपमागत्य श्रुतिं नाटयतः )

अर्जुनः ( सोच्छ्वासम् )

सुन्दरि ! बहुनिर्मितिसमुद्भेजितेन विधात्रा निर्मितासीति न प्रत्येमि । मन्येऽहं,

रिङ्गल्लोलतरङ्गभङ्गविलसद्देवापगातश्छविं
वासन्तीरजनीकलाकलनतो लावण्यमङ्गस्फुटम् ।
आकारं प्रकृतेश्चिर्त्ति ग्रहगणादाखण्डलान्मण्डनं
चन्द्रादाननमार्दवं बुधतयोन्मुच्यैव जातासि किम् !!१६।।

ऊर्वशी ( सनिर्वेदम् )
एष परित्यक्तमर्त्यलोकोऽयं निघृ'णः पाञ्चालीप्रणयपर्युत्सुकोऽद्यापि तामेव सोत्कण्ठापरिवाहं स्मरति ।

रम्भा ( अङ्कपाल्यां लालयन्ती )
अयि कोपनशीले ! आद्यन्तमश्रुत्वैव किम्मुधाऽऽशङ्कसे ? अहं पुनर्मन्ये यत्त्वमेवास्य व्याहरणस्य मूलम् ।
( पुनः श्रुतिमभिनयतः )

अर्जुनः देवाङ्गने ! ऊर्वशि !! सर्वथा प्रीतोऽस्मि दर्शं दर्शं त्वाम् ।

ऐलेयप्रणयानुबन्धमुषितं यज्जीवितं ते क्वचिन्,
मर्त्यानां भुवि सम्भवभूव जनिदं चन्द्रान्वयस्य ध्रुवम् ।
तेनैव त्रिदशेश्वरं सविनयं त्वं सेवमाना शुभे
स्वायत्तीकृतकल्मषाऽपि मधुरा गङ्गेव राराज्यसे ।।१७।।

रम्भा ( सोल्लुण्ठम् )
अपिनाम पाञ्चाल्यास्संस्तवनं तुभ्यं रोचते ?

ऊर्वशी ( सव्रीडम् )
सखि रम्भे ! किम्मामुपहससि ! न मया किमप्यत्याहितमाशङ्कितम् । सर्वथैकान्तप्रणयिनो भवन्तीमे मर्त्याः ।

रम्भा ( सावधारणम् )
भवतु ! साम्प्रतं विश्रब्धभावेन प्रतीक्षोत्तानहृदयं कान्तमुपगच्छ । सुखशयितप्रच्छिकाहं प्रभाते पुनस्त्वां द्रक्ष्यामि ।
( परावृत्य सभ्रूभङ्गम् )
सखि ऊर्वशि ? शिवास्ते पन्थानस्सन्तु !
( इत्यपक्रामति )

अर्जुनः ( शय्यातः समुत्थाय कुतुकोत्कण्ठां नाटयन् )
हन्त भोः ! स्वप्नवेलेव स्मृतमात्रोपलब्धिर्जाता सुरलोकवसतिः ? श्वः प्रातर्वेलायामेव मम प्रस्थानकौतुकं सम्पत्स्यते ।

( स्मृतिचिन्तां नाटयन् )

अपि नाम प्रस्थानात् प्राक् सकृदेव पुनः ऊर्वशीदर्शनं स्यात् ।

( अर्धावृतकवाटयुगलमनावृत्य मन्दमन्दं कौन्तेयपार्श्वमुपगम्य चानङ्गभावं दर्शयन्ती )

ऊर्वशी ( सलज्जम् )

पुरुषोत्तम ! त्वद्गुणपत्रालमुद्रितेयम् ऊर्वशी स्वयमेवत्वद् दर्शनोत्सुका तिष्ठति ।

( इति सलज्जानुरागं पाणिभ्यामर्जुनस्य सव्येतरं प्रकोष्ठं गृह्णाति )

अर्जुनः ( सातंकितभयं सोद्वेगं किञ्चित्पदं पश्चाद्गत्वा )

देवि ! किमिदं भवत्याऽनुष्ठीयते !

ऊर्वशी ( हतप्रभेव पुनरपि चित्तवृत्तिं समाधाय )

पुरुषोत्तम ! त्वद्गुणपराक्रमनिर्जितेयं दासी मन्दारप्रसूनलुब्धा मधुव्रतगेहिनीव कामयमाना सन्तिष्ठते । तत् क एष निर्दयो व्यवहारः ?

अर्जुनः ( कर्णौ पिधाय )

शान्तं पापम् । देवि वासवप्रेयसि ! मा मैवम् !

यथाचरति वात्सल्यं हरिजाया जयन्तके ।
तत्प्रणयानुवर्तिन्या भवत्याऽपि तथा मयि !!१८!!

ऊर्वशी ( कपोलपाण्डुरतां वेपथुञ्च नाटयन्ती )

कौन्तेय ! अप्सरसो वयं विरञ्चेः वरप्रभावात् व्यभिचारदोषमुक्ताः स्मः । तदलमात्मपौरुषावमानेन । पश्य,

आह्लादयन्ति कासारं प्रासादं गगनं भुवम् ।
समरूपं सिता ज्योत्स्ना पक्षिणं पुरुषं पशुम् !!१९!!

अर्जुनः ( ससंयमम् )

देवि ! नैतन्मय्युपपद्यते ! मर्त्याः प्राणिनो वयं धर्माचरणनिरुद्धाः न खलु स्वैरमाचरितुं शक्नुमः । पश्यतु भवती,

समरूपा समाह्लादा तुल्यभाऽपि विधोर्मुदी ।
कुमुदं ह्येव बध्नाति प्रेम्णा न खलु वारिजम् !!२०!!

ऊर्वशी ( सोद्वेगम् )

किरीटिन् ! प्रत्यायितास्मि वृत्रनिषूदनेन यत्त्वं मयि साभिनिवेशं बलवत् स्निह्यसि । रङ्गशालायामपि मां निमीलनभ्रंशजुषा स्निग्धदृष्ट्या प्रेक्षमाणस्स्थितोऽसि !

अर्जुनः देवि ! मन्येऽसावेव मद्व्यवहारस्तातचरणस्य भ्रान्तेः कारणम् !

ऊर्वशी न खल्ववगच्छामि ।

अर्जुनः देवि ! कृतयुगे भवती राजर्षेः पुरूरवसोऽर्द्धाङ्गिनीत्वमुपगता सती चन्द्रवंशस्यादिजननी भूतेति सात्मगौरवं ससम्मानं मयार्जुनेन चन्द्रवंशजेन साभिनिवेशं भृशं प्रेक्षितेति । मन्ये,

यथार्भकः कोऽपि निरीक्षते स्वां
विलोलदृष्टि जननीं पिपासुः ।
तथैव साक्षीकृतपूर्वभाव—
स्मृतिप्रमुग्धेन मयाऽसि दृष्टा !!२१!!

ऊर्वशी ( समुज्जृम्भमाणं पारुष्यं नियम्य )

भवतु । कृतयुगे मया यत्कृतं साम्प्रतं द्वापरे तन्न प्रभवति । पार्थ ! एषाऽहमिदानीं त्वां विषयीकृत्य मन्मथशरासारविद्धा कामयमाना तिष्ठामि ! धर्मज्ञोऽसि । मम मनोभवरुजमपाकर्तुमर्हसि । पश्य,

धातुः सृष्टौ निखिलरमणीरत्नमुख्यास्मि वृष्टा
लावण्याख्यं जगति महितं तत्त्वमास्ते मयैव !
पीयूषम्मे क्षरति नितरां विग्रहाङ्गात्किरीटिन्
नार्हस्येवं मदनविकलां मां निराकर्तुमद्य ॥२२॥

अर्जुनः ( दृढतां संयमञ्च नाटयन् )

देवि ! मद्वंशजननि ! न मां पापकर्मण्यस्मिन् प्रसह्य नेतुमर्हति भवती । पाण्डुनन्दनोऽहं न क्षमेऽधर्माचरणाय ।

ऊर्वशी ( सरोषमश्रुपूरितमुखी )

मूढ ! न मां जननीं वक्तुमर्हसि । गहना गतिः धर्मस्य । केनाऽपि कयाऽपि सार्धमुपपन्नः सम्बन्धः शरीरस्यागेनैव विनश्यति । अदृष्टभोगपरिपाकवशात् प्रत्येकं जीवो विविधैः सम्बन्धैरन्वितो जायते । न कोऽपि स्मर्तुं शक्तः स्वपूर्वजन्मसम्बन्धान् ।

अर्जुनः ( अविचलभावेन )

मातः, क्षन्तव्योऽस्मि । न मेऽनुचितेऽस्मिन् प्रस्तावे प्रवृत्तिः ।
( इति करसम्पुटं विधाय प्रणमति )

उर्वशी ( लोहितेक्षणा सक्रोधम् )
अलमलं भोः धृष्टकापुरुष ! क्लीव !! पुरन्दरेण त्वया चाद्य विप्रलब्धाऽस्मि ।
( सोच्छ्वासं विघूर्णितनयनाभ्याम् )
अलभ्यलावण्यललामां कमलालयां मामूर्वशीं विनिवेदितमनोभव-भावामपि यत्त्वं षण्ढ इवोपेक्षसे प्राप्स्यसि निश्चप्रचमस्याविनयस्य फलमपि ।
( वामेतरं बाहुमुद्यम्य )
मूढ ! अङ्गीकुरु ममाभिशापम् । वर्षमात्रं षण्ढीभूय वैलक्ष्यमनु-भविष्यसि । सुन्दरीणां मध्ये निवसन्नपि स्वपौरुषोपहासं द्रक्ष्यसि ।
( इति निर्विण्णभावेन मन्दं मन्दमपक्रामति )

अर्जुनः ( किंकर्तव्यविमूढतां नाटयन् )
हन्तभोः कुतोऽयमनर्थसम्पातः ?
( धृतिमभिनीय )
भगवन् नन्दनन्दन ! अन्तर्यामिन् !! एष भवत्पादेन्दीवरचञ्चरी-कोऽर्जुनो विपन्नस्तिष्ठति ! शरणागतोऽस्मि, रक्षस्व भवदेकसर्वस्वं कौन्तेयं माम् । प्रभो,

धर्मो मयाऽऽहोस्विदधर्म एव
वृतोऽद्य जाने न मनागधीरः ।
त्वमेव साक्षी मम सद्व्रतानां
शापोऽप्ययम्मे शमुपैति तस्मात् !!२३!!

( जवनिकापातः )

## पात्रपरिचयः

मेहरुन्निसा ( अन्तःपुरसेविका )

आयशा ( अन्तःपुरसेविका )

......बाई ( औरङ्गजेबमहिषी, अभिन्नप्रेयसी )

सूत्रधारः ( प्रयोगप्रस्तावकः )

औरङ्गजेबः ( मुगलवंशीयो दिल्लीश्वरः )

मीरजुमला ( पूर्वं गोलकुण्डाराज्यस्य प्रधानामात्यः सेनापतिः सम्प्रति दिल्लीश्वरसभासद् )

अमीरखानः ( इलाहाबादप्रान्ताध्यक्षः )

शाइस्ताखानः ( दिल्लीश्वरमातुलः )

रचनाकालः अप्रैल १६७६ ई० ।

सन्दग्धेऽपि कलेवरे पितृमखज्वालावलीढेऽनले
वैराग्यङ्गमिते पिनाकिहृदये द्वैधीभवज्जीविते।
प्रीतिर्दक्षसुताशशाङ्कधरयोस्सन्देहदोलाचला
या सम्प्राप पुनर्नवेव नवतां जीव्यात्तया भूतलम् ॥१॥

अपि च

देवि प्रेयसि वल्लभे प्रियतमे प्राणेश्वरि प्रेमिणि!
मज्जन्मान्तरसङ्गिनीति बहुशो हृद्यं समाराधिता।
तत्तच्छन्दसमुत्थभावविकसत्सापत्न्यशङ्कालस-
त्प्रीत्यप्रीतितरङ्गरिङ्गणसहा हेरम्बधात्री जयेत् ॥२॥

( नान्द्यन्ते ततः प्रविशति रमणीयवेषः सूत्रधारः )

सूत्रधारः ( पुष्पाञ्जलिं विकीर्य नाट्येन परितोऽवलोक्य च )

अयि भोः प्रयोगदिदृक्षवः सहृदयसामाजिकाः! भवद्भिराज्ञप्तोऽस्मि नवीनतमलघुरूपकं मञ्चविषयीकर्तुम्! तदस्मिन् सन्दर्भे सत्स्वपि पञ्चषेषु नवैकाङ्किषु यावदिदानीं निश्चेतुं न शक्तोऽस्मि यत्कतम-त्प्रकरणमाश्रित्य नाट्यप्रयोगमुपस्थापयानि।

( किञ्चित्पदमग्रेसरीभूय, सगूढस्मितम् )

अहमपि किं करवाणि? विचित्रेयं तीर्थपतिपुरी! विचित्राश्च वर्तन्त एतदीयाः पौरजनाः। वाराणसेयानां धर्मप्रवणत्वं, मोहमयी-निवासिनां मोहमयत्वं, देहलीवासिनां सुभगम्मन्यत्वं, लक्ष्मणपुरी-याणाञ्च वैलास्यं सर्वथा सुस्पष्टं सर्वजनगोचरञ्च। परन्तु प्रयागपुरवास्तव्यानां किंविधत्वं गणिकाहृदयमिव विरञ्चिरेव जानातु!

( नेपथ्येऽनुश्रूयते )

सूत्रधारः (नेपथ्यवार्तामाकर्ण्य स्फुटाट्टहासपरायणान् सहृदयदर्शकान् संल्लक्ष्य)

सहृदयजनाः! श्रुतं भवद्भिर्नर्मवचनं प्रच्छन्नभरतस्य? सत्यमेवा नुभूतं मुस्लिमकवितल्लजेन अकबरइलाहाबादीमहोदयेन! परन्तु तत्राप्येतदपरं वैशिष्ट्यं यद्विवङ्गते श्रीमत्यकबरमहाभागे प्रयागे

साम्प्रतमेकमात्रं वस्त्ववशिष्टं—तत् ( अमृतफलम् ) अमरूद-फलम् !!

( गम्भीराकृतिं नाटयन् )

भवतु नाम । प्रकृतिमनुसरामस्तावत् । बाढम्, किम्मया कथितम् ?

( स्मृतिं नाटयन् )

स्मृतं खलु । सहृदयबन्धवः कथयन्नासं यदस्मिन् प्रयागनगरे पदे पदे रुचिवैचित्र्यं व्यक्तित्ववैचित्र्यं वा संल्लक्ष्यते । अत्र यावन्त्येव मन्दिराणि तावन्त्येव गिर्जागृहाणि, तावन्त्येव गुरुद्वाराणि तावन्त्येव च मसजिदाख्यपूजास्थानानि । सर्वधर्मसमन्वयक्षेत्रमिदम् !!

( अकस्मादेव नेपथ्येनुश्रूयते )

अल्लाहोऽऽ अकबरऽऽऽ
अलहम्दु लिल्लाह रब्बिल् अलमीन् अर्रहमानिर्रहीम । मालिकि यौमिद्दीन य्यागनाबुदु वैय्यागनस्तईन । इह्दिनस् सिरातल् मुस्तकीन् सिरातल् लज़ीन् अनअम्त अलैहिम् गैरिल् मग्मूबि अलैहिम् वलज़् ज्वाल्लीन् ।
अल्लाहोऽऽ अकबरऽऽऽ
अस्सलामु अलैकुम् वरहमतुल्लाह । अस्सलामु अलैकुम् वरहमतुल्लाह !!

सूत्रधारः ( साश्चर्यं समोदञ्च पुरतोऽवलोक्य )

अये प्रयागप्रशस्तिगायनपरायण एव मयि कुतोऽयम् इस्लामधर्मप्राण-भूतस्य कुरानाख्यधर्मग्रन्थस्य सान्ध्योपासनमधुरगीतयश्श्रूयन्ते ?

( प्रत्युत्पन्नस्मृतिमभिनीय )

ज्ञातम्मया, ज्ञातम्मया !!

( सहृदयाभिमुखीभूय सहृदयाभिमुखी )

मान्यवर्याः ! प्रयोगप्रस्तुतिविलम्बकातरेण मयाऽभिनेयलघुरूपक-निर्णयभारं सुहृज्जनोपरि विन्यस्यैव भवन्मनोरञ्जनं विधातुमत्रा-गतम् । तत्साम्प्रतमनेन प्रार्थनास्वरेण सर्वथा सिद्धं यदद्य श्रीमद्भिरभिराजराजेन्द्रमिश्रैर्विरचितं नूतनतमम् ऐतिहासिकं लघु-रूपकं प्रस्तोतुं निरणायि मत्सहचरैः । तथा हि,

राजेन्द्रो मधुरः कविः परिषदप्येषा हृदुल्लासिनी
हृद्या प्रीतिकथा तुरुष्कनृपतेरौरङ्गजेबस्य च।
शृङ्गारोऽत्र रसः प्रधानममृतं देवैकपेयं परं
नो किञ्चिद्व्यपहीयते समुदितस्सर्वो गुणानां गणः ॥३॥

अपि च

मूलं श्रीकविकालिदासकविता श्रीहर्षवाणी तनुः
पत्रं श्रीजयदेवदेववचनं श्रीविल्हणोक्तं सुमम् ।
श्रीमत्पण्डितराजकाव्यगरिमा यस्यैकपुण्यं फलं
जीव्याद्धन्त निसर्गजोऽयमभिराड्राजेन्द्रकाव्यद्रुमः ॥४॥

तदहमपि कथानकप्रत्यवायो मा भूदिति मन्वानो नेपथ्यसदनमेव प्रविशामि !

( इत्यवसिता प्रस्तावना )

## प्रथमं दृश्यम्

नवपञ्चाशदधिकषोडशशततमस्य खिस्ताब्दस्य ( १६५९ ई० ) ग्रीष्मकालः । प्राचीनदिल्लीनगरे मुगलवंशोत्पन्नस्य राजराजेश्वरस्य आलमगीरेत्युपाधिधारिण औरङ्गजेबस्य शासनाधिरोहणमहोत्सव-सम्भारा अहर्निशं प्रवर्तमानाः सन्दृश्यन्ते । सर्वेऽप्यधीनस्थास्तुरुष्क-राजपूतभूपतयो राजधान्यां दरीदृश्यन्ते । दिल्लीनगरी नवपरिणीता वधूटीव विविधालङ्कारविराजिता शिखावलावलिस्मिता बहुतरं चकास्ति ।

लालकिलेत्युपनाम्ना विख्यातस्य मुगलराजपरिवारनिवासाश्रयस्य महादुर्गस्योपान्तभागे [1]चन्द्रिकाचतुष्कक्षेत्रं यत्र खलु श्रेष्ठिजना राजपुरुषाश्च कृतवसतयो राजन्ते । सन्ध्याकाले वद्धालापाः पौर-जना इतस्ततः परिभ्रमन्तः दृश्यन्ते । उपनगरस्य पश्चिमोद्देशे कस्मिंश्चित् प्राचीने तुरुष्कपूजागृहे मसजिदेत्याख्याते नमस्यां ( नमाज् ) सम्पाद्य केचन जनाः स्वगृहं प्रस्थिताः वर्तन्ते । अवशिष्टास्त्रयः परस्परं वार्तां लपन्ति ।

मीरजुमला कियत्प्रतीक्षानन्तरं समायातोऽयं दिवसः ? वर्षद्वयं व्यतीतम् ! कियन्ति युद्धानि निर्णीतानि, कियत्यो विपत्तयस्सोढाः सुखमय-

---

१. चाँदनीचौक ।

भविष्याशया। तदानीन्तु सर्वमेव संशयगर्भमनिश्चितमप्रतीयत।
किन्तु—( इत्यर्धोक्ते सहचरं विलोक्य )
अमीरखान ! स्मरसि तद्वृत्तं यत्खलु बुरहानपुरस्कन्धावारे घटितमासीत्।

अमीरखानः ( सस्मितं, सव्येतरेण पाणिना कूर्चकण्डूतिमभिनीय )
स्मरामि बन्धो ! स्मरामि। धृतजीवितेन मया कथं खलु विस्मर्तुं शक्यते !

शाइस्ताखानः ( सोत्कण्ठं समीपमुपेत्य )
बन्धो ! नेदं युज्यते। परस्परमेव न जाने किं सङ्केत्य संस्मार्यं वा युवां नन्दथः ! मय्येव किमत्याहितं युवयोः ? मह्यमपि कर्णरसायनं देहि !

मीरजुमला मातुलपाद ! नात्रभवान् आवाभ्यामुपेक्ष्यते। राजराजेश्वर आलमगीरोऽस्माकं त्रयाणामेव समानतयाऽधीश्वरोऽन्नदाता च। एवम्भूते न किञ्चिदपि भवतो निह्नोतुं शक्यते।

शाइस्ताखानः ( सस्नेहं साभिजात्यञ्च )
यद्येवं तर्हि मामपि विदितवेदितव्यं कुरुताम्।

मीरजुमला यन्मया सङ्केतितं तदेव कथयामि। १६५७ तमे ख्रिस्ताब्दे [1]अर्गलानगरदुर्गे स्वपितृचरणं शाहजहानं पक्षाघातपीडितं विज्ञाय राजराजेश्वर औरङ्गजेबः विषादचिन्तासक्तस्सन् राजधानीं प्रस्थितः। तथा हि,

कुर्वन्नासीत्स्वकीयं पितृनिकटचरस्सेवया राजराजं
भूपम्मानी विशेषो मुगलकुलमणिर्ज्येष्ठदाराशिकोहः।
बङ्गप्रान्ते शुजाऽपि प्रशमतिरिपुकोऽघोषयत्स्वाधिपत्यं
सौराष्ट्रे गुर्जरेऽद्धा धृतनृपतिपदोऽभूद्विशङ्को मुरादः ॥५॥

अमीरखानः ( सोच्छ्वासम् )
सत्यमेव विपत्पङ्कनिमग्न आसीदालमगीरः। बड़ीबेगमेत्युपाधिधारिणी जहाँनाराऽपि दाराशिकोहे कृतपक्षपाता निरन्तरमेव राजपुत्रमौरङ्गजेबमुन्मूलयन्ती दुर्गान्तःपुरे स्थिताऽऽसीत्।

---

१. Agra fort

मीरजुमला मातुल ! युक्तमाह खानबन्धुः । न कोऽप्यासीदालमगीरस्य पक्षधरः । त्रयोऽप्यन्ये सहोदरास्स्वार्थमात्रं साधयन्तोऽनुकूलमवसरं प्रतीक्षमाणा आसन् । परन्तु जयतादसौ करुणावरुणालयः परमेश्वरो येनास्माकं स्वामीदृङ् निगूढनयवर्त्मवित् देशकालज्ञो मित्रामित्र-विवेकविचक्षणश्च कृतः ।

शाइस्ताखानः मीर ! औरङ्गजेबस्य प्रस्थानवर्णनं त्वया समारब्धमासीत् । ततस्ततः ?

मीरजुमला मातुल ! दक्षिणाशावधूटीं विरहय्य ससैन्यं प्रस्थितः सुहृज्जनपरिगतो मुगलकुमारः द्वादशदिनानन्तरं बुरहानपुरमाससाद । तदनुजो गुर्जरप्रदेशप्रान्ताध्यक्षो मुरादोऽपि पत्रमवाप्यौरङ्गजेबस्य गूढाभि-प्रायं सम्यगवधार्य महत्सैन्यपरिवारितोऽहमदाबादनगरात् पुरस्स-सार । ततश्च,

रेवामुत्तीर्य यावद्बहलबलयुतः क्षिप्रमौरङ्गजेबः
मातङ्गाश्वैस्समृद्धश्श्रितशतसुभटोऽवाप दीपालदेशम्[1] ।
तावत्साम्मुख्यमाप प्रबलतरबलोऽसौ मुरादोऽपि चण्डः
एकीभूतावुभौ तौ तिमिररुधिरजौ[2] चेलतुस्सङ्गरार्थम् ॥६॥

शाइस्ताखानः भद्र ! कुतूहलं मे वर्धते । ततस्ततः ?

मीरजुमला मातुल ! तदनन्तरं यद्घटितं तदतिसंक्षेपेण कथयामि । द्वयोरपि राजपुत्रयोः सम्मिलितं सैन्यं दाराशिकोहविहितैर्विघ्नैः पुनः पुनरपि प्रतिहन्यमानं यथाकथञ्चित् उज्जयिनीनगरस्योपकण्ठं सप्तक्रोशं यावदागच्छत् । ततोऽकस्मादेव मान्दवदुर्गाध्यक्षमुखात् तद्वृत्तं समाकर्ण्य शाहजहानस्य सेनापतिर्महाराजो जसवन्तसिंहोऽपि युगान्तजलधरसन्निभां भीमविक्रमां पृतनां पुरस्सरीकृत्य औरङ्ग-जेबमुरादयोर्मार्गविरोधार्थमकबरपुरमुपेतः । ततश्च नातिचिरं प्रारब्धमासीद् भैरवं युद्धम्,

ज्वालामालां वमन्ती शतशतसुभटान् घातयन्ती शतघ्नी
शुण्डादण्डान् गजानां हयकरभगलान्दारयन्ती बभासे ।
भिन्दन् वक्षांस्यरीणां सुभटकरतले चन्द्रहासो व्यलोकि
भूतं नो वा भविष्यत्यथ भवति न वा तादृशं घोरयुद्धम् ॥७॥

१. दीपालपुर । २. तैमूर के वंशज ।

शाइस्ताखान: ( सोच्छ्वासम् )

अपि नाम तस्मिन् युद्धेऽहमपि भवेयम् ! भद्र, ततस्ततः ।

मीरजुमला मातुल ! जसवन्तसिंहस्य राजपूतसैनिकैः महच्छौर्यं प्रदर्शितम् । प्राणान् पणीकृत्य तैर्यावच्चेतनं विजयार्थं प्रयतितम् । परन्तु परमेश्वरानुग्रहात् विजयलक्ष्मीः औरङ्गजेबं वृतवती । पलायितं जसवन्तसिंहेन ।

अमीरखान: ( सोत्साहम् )

इतः परं समारभते आलमगीरस्य विजयपरम्परा । समूहगढयुद्धे दाराशिकोहोऽपि पराजितो बन्दीकृतश्च । पश्चाच्च दुर्वस्त्रैराच्छाद्य मातङ्गपृष्ठमधिरोप्य नास्तिकोऽयमिति प्रख्याप्य च १६५७ ख्रिस्ताब्दस्य सितम्बरमासे निर्दयं व्यापादितः । द्वितीयोऽपि मुगलराजपुत्रः शुजा स्वयमेव मृतो दुर्घटनायाम् । जराजर्जरितश्च मुगलेश्वरः शाहजहानोऽर्गलानगरदुर्ग एव सपरिवारो निरुद्धः स्वभवने ।

मीरजुमला खानबन्धो ! इयत्पर्यन्तंन्तु सर्वमप्यासीद्रुचिकरम् । प्रणये युद्धे च सर्वं सम्भवति, समीचीनञ्च भवति । परन्तु येन विधिना साधुस्वभावो वराको मुरादो यमसदनं प्रेषितो राजराजेश्वरेण, तेन तच्चरित्रं कलङ्कविकलं दृश्यते ।

( करुणया गादीभूय )

अमीरखान ! अपि स्मरसि कनिष्ठोत्तमसहोदरस्य मुरादस्य लोमहर्षकं गलच्छेदनम् ।

अमीरखान: न केवलं गलच्छेदनं प्रत्युत राजपुत्रस्य तत्करुणपत्रमपि प्रत्यक्षरं स्मरामि यत्तेन प्रत्यक्षीकृतमृत्युना निरुपायेन औरङ्गजेवं प्रति लिखितमासीत् ।

शाइस्ताखान: ( भागिनेयं मुरादं स्मरन् साश्रुनयनः )

भद्र अमीरखान ! मामपि मुरादमातुलं श्रावय तत्पत्रप्रतिपाद्यम् ।

अमीरखान: मातुल ! प्रशान्ते युद्धे निर्मक्षिके च जाते शासनतंत्रे औरङ्गजेबो मुरादमपि पथशूलं मन्यमानस्तद्विनाशाय कृतप्रयत्नोऽभवत् । प्रथमं तावत्तेन मुरादपक्षीयाः शुभचिन्तकाः पदप्रतिष्ठाधनैश्चात्मीयीकृताः । तदनन्तरं शासनविषयकं किञ्चिदत्यावश्यकं गोपनीयं

वृत्तं सम्पादनीयमावाभ्यामिति सस्नेहं सानुरोधं विज्ञाप्य ईद-महोत्सवस्य शुभदिवस एव औरङ्गजेबेन मुरादस्समाहूतो मथुरा-स्थिते निजस्कन्धावारे। स्वशुभचिन्तकैः भृशमुपदिष्टोऽपि परा-मृष्टोऽपि विशुद्धहृदयो मुरादोऽग्रजं द्रष्टुमुपययौ।

अथ यावदेव कुमारः सम्पादितभोजनक्रियो व्यपनीतसमग्रायुधो निर्विशङ्कं निद्राति तावदेव औरङ्गजेबसङ्केतिताः शेखमीर-प्रभृतयस्सैन्यचराः प्रविश्य वितानमण्डपे मुरादं पर्यगच्छन्।

आसन्नमृत्युर्मुरादोऽश्रुविगलितनेत्राभ्यां परितो निरीक्षमाण एतावदेव सन्दिदेश निजाग्रजम्,

[1]परित्यक्तं साक्ष्यं स्वयमपि कुरानेन विहितं
वचो दत्तं ध्वस्तं बहुशपथसौगन्धमहितम्।
मया निस्स्वार्थेनावितथहृदयेनापि च समं
अये बन्धो! स्नेहिन्नहह भवता किं कृतमिदम् ॥८॥

( सर्वेऽपि मौनमास्थाय परस्परं करुणं विलोकयन्ति )

मीरजुमला ( चेतनाभिनीय )

भवतु नाम। यद्वृत्तं तद्वृत्तमेव। किं तेन स्मृतेन? मुगलवंश-परम्परायां रक्तपातं विना को नु खलु राज्यासनं प्राप्तवान्? न कोऽप्यत्र क्षीरक्षालितः!

अमीरखानः मीरबन्धो! अत्र प्रदर्शितस्त्वया पक्षपातः।

मीरजुमला कीदृशः पक्षपातः? स्फुटं कथय।

अमीरखानः ( सगूढहासं सोल्लुण्ठञ्च )

श्रीमन्! पञ्चाङ्गुलयोऽपि ते घृत एव वर्तन्ते। बुरहानपुरस्कन्धा-वारे मासंपर्यन्तं परिशीलितविश्रामं दिल्लीश्वरं समाजयितुं रञ्जयि-तुञ्च त्वया प्राणपणेन प्रयतितम्। तस्मिन्नेव महोत्सवसम्भारे त्वयाऽऽ-नीता काचिदनिन्द्यसुन्दरीनर्तकी जैनाबाईनाम्नी या पुनः शुष्कहृदयस्यापि कलासंगीतनृत्यादिविरोधिनोऽप्यालमगीरस्य हृदय-मन्दिरं स्वचरणकमलमञ्जीरक्षुद्रघण्टिकाभिर्मुखरं कृतवती। श्रुत-म्मया यत्साम्प्रतं सैव भूरिभाग्या राजराजेश्वरेण सबहुमानं महिषीपदमारोपिता?

---

१. आखिर बाँहमचू मने दुरुस्त एख़्लास साफ़ बातिन चुनी करदीद—बाहक अहदो पैमाने दुरुस्त कि कुराने मजीद जामिन तरफ़ेन बूँद—चुनी बजा आवरदीद !!

मीरज़ुमला (सस्मितम्)
अमीरखान ! सत्यमाह भवान् । स्त्रियश्चरित्रं पुरुषस्य भाग्यं कामं देवो न जानाति परन्तु स्त्रियो भाग्यं पुरुषस्य चरित्रन्तु वयं साधु जानीमः । ( सर्वेऽपि निरर्गलं हसन्ति )

शाइस्ताखानः ( पुरतोऽवलोक्य )
पश्यतं तावत्, केचिज्जनाः समायान्ति । साम्प्रतं प्रस्यातव्यमस्माभिः । बहु कथितं श्रुतमद्य । श्वः पूर्वाह्णे राजसभायामेव मिलिष्यामो वयम् ।

अमीरखानः
मीरज़ुमला } युक्तमाह मातुलवर्यः । भवतु प्रणमावः ।

( इति विष्कम्भकः )

## द्वितीयं दृश्यम्

( राजराजेश्वरस्य औरङ्गजेबस्य वासभवनं यस्मिन् बुरहानपुरनर्तकी जैनाबाई महिषीपदसौभाग्यमुररीकृत्य साम्प्रतं विराजते । सर्वमपि भवनं मृगमदचन्दनसुवासितजलाभिषेचनेन विकसत्परिमलं दृश्यते । सुसज्जिते कक्षे सोद्वेगा प्रतीक्षापरायणा लावण्यमयी राजमहिषी इतस्ततः परिभ्रमन्ती दृश्यते ।
अकस्मादेव द्वारमुद्घाट्यते । ससम्भ्रमं द्वे कामिन्यौ प्रविशतः । )

जैनाबाई ( कृत्रिमं क्रोधं दर्शयन्ती )
कथं रे मेहरुन्निसे ! क्व मृताऽऽसीः । एतावदपि नो जानासि यत्किं कार्यं कियता कालेन सम्पादनीयं भवति ? कः कालस्त्वामन्विष्यामि ?

मेहरुन्निसा ( क्षितितलनिहितजानुपाणिः )
स्वामिनि ! क्षन्तव्यास्मि । नात्र मेऽपराधः, यावत् ( इत्यर्धोक्ते )

जैनाबाई तत्किं मेऽपराधो वर्तते ? यावद्यावदिति किं सारिकेव रटसि ?

मेहरुन्निसा स्वामिनि ! यावदेव चन्द्रिकाचतुष्कापणेषु क्रीतगन्धद्रव्या गृहीतधम्मिल्लरचनोपयोगिपुष्पहारा च सार्धमायशयेतः प्रस्थितास्मि तावदेव पार्श्ववर्तिनि मसजिदे केचन राजपुरुषाः सन्दृष्टा मया । स्वाभिज्ञाननिवारणार्थमेव तत्प्रस्थानकालं यावत्प्रतीक्षमाणया भवच्चरणचारिण्या मया किञ्चिद्विलम्बितम् । श्रुत्वा स्वामिनी प्रमाणम् ।

जैनाबाई ( सस्मितं, सस्नेहं मेहरुन्निसायाः वामकपोलं नखक्षतेन भावयन्ती)
जानामि, जानामि ! व्याजरचनायां पण्डितासि । यद्विकरोषि तन्मयि सुष्ठु जानासि ।

भवतु नाम । याचितानि वस्तून्यानीतवत्यसि ?

मेहरुन्निसा भट्टिनि ! पूर्वमेवोक्तम्मया । एतत्सर्वं समक्षमेव स्थाप्यते ।

( दुकूलोत्तरीयमुद्घाट्य सर्वाणि वस्तूनि प्रदर्शयति )

भट्टिनि ! एषा चाम्पेयकुसुमहारयष्टिर्मयाऽतिप्रयासेन भवदर्थं क्रीता । मन्येऽनयाऽलङ्कृतामत्रभवतीं सम्प्रेक्ष्यैव राजराजेश्वर आलमगीरो मुदितहृदयो भविष्यति ।

आयशा ( चपलचपलं समीपमुपेत्य सविलासम्, चरणौ निर्दिश्य ) मदनुरञ्जितयोर्लाक्षारसविहितचित्ररचनयोरनयोश्शतपत्रकोमलयोश्चरणयोर्निपत्य सोच्छ्वासं वदिष्यति च निखिलमपि मुगलसाम्राज्यं मया समुपायनीक्रियतेऽत्रेति ।

जैनाबाई ( पृष्ठोपरि कोमलमुष्टिघातं नाटयन्ती )

धृष्टे ! बहु जल्पसे ! इतः पलायस्व !

( आयशाऽस्फुटहासं जनयन्ती धावत्यन्यत्र )

मेहरुन्निसा ( सादरम् )

भट्टिनि ! गच्छाम्यहम् ?

जैनाबाई ( सानुनयं, सप्रणयम् )

मेहरुन्निसे ! मा गच्छ त्वम् । आयशां भण, सा गच्छतु । अद्य रात्रौ मत्पार्श्वमेव तिष्ठ । निभृतनिभृतमेव मत्कृतम् आलमगीरप्रणयपरीक्षणं पश्य जालमार्गतिरस्करिणीमवलम्ब्य ।

मेहरुन्निसा ( अविश्वासं नाटयन्ती, साश्चर्यम् )

स्वामिनि ! सत्यमेव भवती राजराजेश्वरप्रीतिं परीक्षिष्यते ? श्रुत्वाऽपि नो विश्वसिमि !

जैनाबाई मूढे ! तत् किं वृथैव प्रलपितम्मया ? एतावताऽऽख्यानेन सम्भाविताऽपि त्वं मूर्खेव पृच्छसि ?

मेहरुन्निसा स्वामिनि ! मयापुनश्चिन्तितं यद्भवत्या परिहासमुखेन विजल्पितम् । तत्केन उपायकौशलेन भर्तुः प्रीतिः परीक्षितुमिष्यते ?

जैनाबाई बहुवादिनी मा भूः । पूर्वमेव सर्वं ज्ञास्यसि तर्हि द्रक्ष्यसि किम् ?

( राजप्रासादसमक्षं विलोक्य ससम्भ्रमम् )

मेहरुन्निसे ! आगच्छत्यालमगीरः । द्रुतमपसर, पार्श्वस्थालिन्द-

कुड्यां निलीय तिष्ठ। शब्दं मा कार्षीः । श्वासपरम्परामपि नियमय। गच्छ !!

( मेहरुन्निसा प्रपलाय्य निलीयते )

(ततः प्रविशति रुचिरराजवेषः औरङ्गजेबोऽभिसारप्रणयमुद्राञ्चितः)

औरङ्गजेबः (अनिन्द्यरूपलावण्यप्रतिमां महिषीं विलोक्य चित्रलिखितइवस्थितः) परमेश्वर ! किमिदं पश्यामि,

राका चान्द्रमसी स्वयं भुवमिमां तारापथादागता
फुल्लत्कैरवलोचना प्रविकसच्छेफालिकागन्धिनी।
राज्यश्रीरथवा तुरुष्ककुलजा मत्पूर्वजैः प्रेषिता
इस्लामैकपरं परीक्षितुमहो औरङ्गजेबन्नु माम् ॥९॥

नैनाबाई ( क्षितौ कायं प्रणिधाय प्रणमन्ती )

जगदाश्रय[1] ! किमिदं यच्चरणसेविनीं दासीमपि नाभिजानात्यत्र भवान् ?

औरङ्गजेबः ( सोच्छ्वासं नेत्रे विस्फार्य प्रत्यागतचेतन इव )

प्राणेश्वरि ! नृत्यगीतवाद्येष्कृतपक्षपातो रूपसौन्दर्यप्रणयानुभवे चोन्मनस्कोऽयमालमगीरस्त्वां दर्शं दर्शं सन्तप्तमाक्षिकमिव[2] यद्द्रवतितरां तत्किमिदम् ।

नैनाबाई ( औरङ्गजेबस्य स्कन्धोपरि प्रगाढमालिङ्गनं। विधाय, कर्णयोः )

जीवितेश्वर ! प्रेमाग्निरयं, रूपज्वालेयं यया प्रसह्य समाकृष्टः शलभो निर्विवेक आत्मानं दहति ।

( भुजबन्धं शिथिलीकृत्य, दीपं सङ्केतयन्ती )

पश्यतु भवान् निमेषमात्रं, जाने कियन्तो दिल्लीश्वराः युगपदेव रूपशिखायां ज्वलितुं पुरस्सरन्ति !

औरङ्गजेबः ( महिष्याः प्रत्युत्पन्नमतिं समाद्रियमाणः सहासम् )

शोभनं शोभनं राज्ञि ! बहु शोभनम्। त्वं तावत्कवयितुमपि जानासि ॥

नैनाबाई प्राणनाथ ! का नु खलु कलकण्ठी वसन्तं दृष्ट्वा न गायति, का वा कुसुमवल्लरी प्रभञ्जनं समवाप्य न कम्पते ?

---

1. जहाँपनाह। 2. गरम मोम की तरह।

औरङ्गजेबः ( पुरस्सृत्य महिषीं निर्दयमाश्लिष्य, चिबुकमुन्नमय्य )
निखिलारातिसंघं जित्वाऽपि त्वां जेतुं न प्रभविष्यामि । गृहाण तावत्प्राभृतकम् आलमगीरस्य ।
( इति सस्नेहं सबहुमानं दाडिमकालिकां[1] समर्पयति )

जैनाबाई प्राणवल्लभ ! दासीं सम्भाव्य भवदागमेन बहूपकृतं भवता । अनुभवाम्यात्मानं प्रत्यसाधारणप्रेम श्रीमताम् । तदाज्ञापयतु स्वामी, केन सेवाविधानेन प्रसादयानि—युग्मायुग्मक्रीडया[2], गुप्तान्वेषणक्रीडया[3], भोजनेन, मधुरपेयेन वा ?

औरङ्गजेबः ( अधिशय्यमुपविश्य तृषमनुभवन् )
प्रिये ! पानीयं पातुमिच्छामि तावत् ।

जैनाबाई एषाऽऽगतास्मि वल्लभ ! एषाऽऽगतास्मि ।
(अन्तःकक्षं प्रविश्य, क्षणानन्तरमेव सुराचषकद्वयेन सार्धं निष्क्रम्य)
एतत्कषायसलिलं निपीयाद्य मनोरमशर्वर्यां दास्या सार्धं विश्राम्यतु भवान् । यद्येतन्निपीयापि पिपासोपचीयते तदशेषयौवनकुम्भमदिरां निपाय्य दासी प्राणवल्लभं तोषयिष्यति ।

औरङ्गजेबः ( चषकमुत्थाप्य सुरागन्धञ्चानुभूय )
प्रिये ! कथमिमां मदिरामानीतवती ? जानासि त्वम् (इत्यर्धोक्ते)

जैनाबाई जगदाश्रय ! सर्वं जानामि । तथाप्यद्य मदिरामेव पाययितुमिच्छामि ।

औरङ्गजेबः किमनेन मुधा निर्बन्धेन ? राज्ञि ! शैशवादारभ्य मयाऽऽलमगीरेण विस्मृत्यापि न कदापि मदिरा स्पृष्टा ।

जैनाबाई प्राणवल्लभ ! कादाचित्कपानेन व्रतं न त्रुटिष्यति, स्वादीयसीयम्मदिरा फारसदेशात्समागता । तदलं तिरस्कारेण । मयाऽप्यद्य निपीता ।

औरङ्गजेबः भवतु । प्राणवल्लभे ! यदि त्वया निपीता तन्मयाऽपि पीतैव । एहि, मत्समीपमुपविश ।

जैनाबाई ( कोपं नाटयन्ती सासूयमुपविश्य )
जगदाश्रय ! ज्ञातम्मयाद्य यत्कियान् अधिकारो मे वरीवर्ति ।

औरङ्गजेबः प्रिये ! किमिदं नाम ! बुरहानपुरस्कन्धावारे सकृद् दृष्ट्वैव त्वां मुषितं मे हृदयम् । राजपदमधिरोहमाणेनैव मयाऽऽलमगीरेण त्वं

१. अनार की कली । २. जूँस-ताक का खेल । ३. लुकाछिपी का खेल ।

सबहुमानमानीय महिषीपदेऽभिषिक्ता । तत्किमिदं सर्वं व्यलीकमेव ।

जैनाबाई राजराजेश्वर ! सर्वमपि युज्यते । किन्तु त्रिलोकसम्पदमवाप्यापि नारी प्रियतमानुरागं विना सन्तप्यते ।

औरङ्गजेबः प्रिये ! समर्पितोऽयमालमगीरस्तुभ्यम् । किमभीष्टं तवापरम् ?

जैनाबाई अलमलीकानुरागप्रदर्शनेन । यन्मयाऽऽनीतमपि मदिरामल्लकमुपेक्ष्य भवता सन्तोषोऽनुभूयते !

औरङ्गजेबः ( महिषीमश्रुपूरितनेत्रामभिलक्ष्य, सानुनयम् )

प्राणप्रिये ! कुरानान्धभक्तोऽयमालमगीरः । इस्लामधर्मानुपालनमेव तस्य जीवनलक्ष्यम् । इस्लामधर्माचारसंहितैव तस्य जीवन-सम्पत्तिः ।

जैनाबाई जगदाश्रय ! न मया किञ्चिद् विजल्प्यते । एषाऽहं तूष्णीमुपगतास्मि ।

औरङ्गजेबः यद्येवं तर्हि नयनयोः किमिदं पश्यामि ? क्षणं तावत्स्मेरानना भव ।

( स्वयमेव महिषीनेत्रद्वयं प्रमृज्य चिबुकमुन्नेतुं प्रयतते )

जैनाबाई प्राणेश्वर ! नेदं नयनाश्रु । मिथ्याभिमानोऽयं मम योऽद्य गलितस्सन् नेत्राभ्यां प्रवहति । अद्य मया ज्ञातं यत्कुरानोपदेशाः मत्प्रीतेरपि प्रियतराः जगदाश्रयस्य !

औरङ्गजेबः ( ससम्भ्रमं पर्यङ्कादुत्थाय )

मा मैवं हृदयेश्वरि ! त्वया विरहितोऽयमालमगीरः निखिलमपि मुगलसाम्राज्यं मृत्तिकामात्रं कल्पते ।

( महिषीं सबहुमानमुत्थाप्य )

तदुत्तिष्ठ । विलम्बं मा कार्षीः । त्वत्प्रसादनायाद्य कुरानमपि तावद् तृणीकरोमि । निजेनैव पाणिना प्रयच्छ मदिराचषकम् ।

जैनाबाई ( सोपचारम् )

अलमायासेन वल्लभ ! एतावतैव सन्तुष्टेयं दासी । तदलमात्मानं सन्ताप्य ।

औरङ्गजेबः ( सप्रणयम् )

सुन्दरि ! अलमालमगीरमन्यथा सम्भाव्य । सत्यमेवाद्य मनोरम-शर्वर्यां त्वदङ्कपाशसौख्यमनुभवन् निर्विघ्नं शयिष्ये । मदिरां विना यौवनमदिरा न स्वादीयसी भविष्यति । तदलं विलम्बेन !

( महिषी [1]त्रिपादिस्थितं मदिराचषकमानीय आलमगीरस्य हस्तेऽर्पयति )

औरङ्गजेब: ( सोच्छ्वासं ध्यानमग्नस्सन् किञ्चिदस्फुटं व्याहृत्य )

अयि भो: परमेश्वर ! मदीनावासिन् मुहम्मद ! अयमालमगीरोऽद्य व्रतमुपेक्षते । प्राणवल्लभां विमनस्कां द्रष्टुं न पारयामि प्रभो ! इयम्मे नेत्रप्रभा, इयम्मे कलेवरचेतना, इयम्मे जिजीविषा ! तत्क्षन्तव्योऽयमालमगीर: ! या खुदा...... या अल्लाह......।

( सविलासं महिषीसमीपमुपगम्य )

विलासिनि ! इदानीमपि स्मितं न प्रकटयसि ? अयमालमगीरस्त्वद्वचनरक्षार्थं त्वत्प्रीतिनिर्यातनाय च त्वदभीष्टं सम्पादयति ।

( इति यावदेव चषकं कम्पितकरेणोत्थाप्य अधरपुटं नयति तावदेव जैनाबाई सवेगं कराघातेन दूरं क्षिपति । चूर्णितं भवति सुराचषकम् । सुरागन्धश्च निखिले वासकक्षे प्रसरति )

औरङ्गजेब: ( चकितस्सन् ) प्राणेश्वरि ! किमिदमत्याहितम् ?

जैनाबाई ( पादयोर्निपत्य )

जगदाश्रय ! आत्मानं प्रति भावत्की प्रीति: परीक्षिता मया । उत्तीर्णोऽत्रभवान् । क्षुद्रदास्या: कृते स्वजीवितव्रतमपि त्यक्तुं बद्धपरिकरो राजराजेश्वर इतिकृत्वा परं विलज्जिताऽस्मि । तत्क्षन्तव्येयं चरणसेविका ।

( इति पुनरपि पादयोर्निपतति )

औरङ्गजेब: ( पाणिभ्यामुत्थाप्य मधुरं लालयन् )

उत्तिष्ठ, उत्तिष्ठ जीवितेश्वरि ! त्वत्परीक्षितोऽयमालमगीर: कृतकृत्यमनुभवत्यात्मनम् ।

( चुम्बितुं विचेष्टमान: )

तत्किमधुनाऽपि पिपासुरेव स्थास्यत्ययं परीक्षार्थी ?

जैनाबाई ( बिम्बाधरं सदयमर्पयन्ती, सोपगूढम् )

अलं प्रतीक्षया स्वामिन् ! मदिराघटोऽयं प्रस्तुत एव ।

---

१. तिपाई पर रखी हुई ।

औरङ्गजेबः (आलिङ्गनबद्ध एवाधिपर्यङ्कमुपविशन्)

हृदयाधिराज्ञि ! किन्तेऽपरमभिलषितं वर्तते ? ननु पश्य,

सुतनु ! तव ,सुखार्थं किन्न कर्तुं समर्थ-
स्तव रतिसुखसेवी सोऽयमौरङ्गजेबः !
निखिलमपि विकीर्णं राज्यसौख्यं त्वदर्थे
पुरपरिजनधर्मञ्चापि शक्तोऽपहातुम् ॥१०॥

जैनाबाई प्राणवल्लभ ! न किमपि । तथापीच्छामि,

भृङ्गं कोऽपि न वारयेत्कलिकया बद्धानुरागाञ्चलं
साम्राज्ये मुगलेश्वरस्य न पिकं गीतैर्विदध्याच्च्युतम् ।
नृत्यन्तौ चरणौ हसन्नु वदनं दध्युर्न विच्छायतां
प्रीतिर्देव ! समर्च्य ताजमहले देवीपदं नीयताम् ॥११॥

## पात्रपरिचयः

उद्घोषकः

चतुर्धुरीणः ( चौधरीनामा ग्रामवृद्धः )

गोविन्दः ( प्रयागविश्वविद्यालयीयः कश्चिद्युवा छात्रः )

राजेन्द्र सिंहः ( वीरसैनिकः )

उमरावसिंहः ( वीरसैनिकः )

आशारामत्यागी ( नायको गुल्मपतिः )

वल्लभरामशर्मा ( सेनापण्डितः )

शतमिताश्चान्ये ( सैनिकाः )

रचनाकाल : मई १९७९ ई० ।

मान्धात्रादिनृपप्रतापविसरद्धूमध्वजालोकिता
सावित्रीनगनन्दिनीजनकजाचारित्र्यगन्धोच्छ्रिता ।
विद्याज्ञानकलाकलापजननी लोकास्थली मध्वरे-
नित्यं सा जयतादमोघकुशलाऽस्माकं धरित्री चिरम् ।।१।।

अपि च

काश्मीरं मुखमण्डलं नगपतिर्नीहारहारावली
बाहू पञ्चनदासमौ प्रविततौ विन्ध्यो नु वक्षःस्थलम् ।
पादौ केरलतामिलौ जलनिधिः रंस्यश्च पाद्याम्बुभृत्
कालिन्दीसुरसिन्धुहृद्यनयनां तां जन्मभूमिं नुमः ।।२।।

( इत्यवसिता नान्दी )

( १९६५ मितस्य ख्रिस्ताब्दस्य सितम्बरमासीया पञ्चविंशति-तारिका । प्रवर्तमानस्य भारतपाकयुद्धस्य पञ्चविंशतितमो दिवसः । मयराष्ट्र ( मेरठ ) जनपदस्य पनवाड़ीनाम्नि ग्रामे प्रातर्वेलायां युद्धसमाचारोत्सुकाः ग्रामीणजनाः समवेताः सन्तिः । ततोऽनुश्रूयते तारतारं रेडियोवार्ताप्रसारणम् )

इयमाकाशवाणी । साम्प्रतं नवीनतमा युद्धसमाचाराः श्रूयन्ताम् । देहलीनगरस्थिते रामलीलास्थले सुमहान्तं जनसम्मर्दं सम्बोधयता प्रधानमन्त्रिणा श्रीलालबहादुरशास्त्रिणा संघुष्टं यद्भारतीयसेना पाकसैन्यं धूलिधूसरीकर्तुं न सङ्कोचलेशमेष्यति । अस्माकं सैनिकाः प्रतिपलमेव विजयश्रियं प्राप्नुवन्तस्सम्प्रति लौहपुर ( लाहौर ) मप्युपरुन्धन्तीति श्रुतम्मयेदानीमेव । भवन्तस्सर्वे देशवासिनः स्वमनोबलं नितरामुन्नमन्तून्नमयन्तु चेति सम्प्रार्थ्यते इति ।

( निमेषमात्रं विलम्ब्य )

आकाशवाण्याः समरसंवाददात्रेदानीमेव समाचारोऽयं प्रेषितो यज्जाटवाहिन्याः मण्डलत्रयेण[1] परिवारितो मेजरआसाराम-त्यागीमहोदयो लौहपुरप्रवेशद्वारं डोगराईग्रामं स्वायत्तीकर्तुं नितरां बद्धपरिकरस्संलक्ष्यते । तथा हि,

१. Three regiments.

गोमन्ते[1] दर्शितश्रीः पुनरपि विजयो श्रीक्रमस्याभियाने[2]
कच्छे स्वच्छप्रचारो भुजबलविजितानेकदुर्दान्तलक्ष्यः।
सोऽयं विक्रान्तशूरो विरचितकविताभालसिन्दूरबिन्दुः[3]
संरोद्धुं डोगराईं प्रलयजलधरोद्दामवेगोऽभियाति ॥३॥

इति वार्ताः। पञ्चदशकलानन्तरं पुनरपि युद्धसमाचारा आकर्णितुं शक्यन्ते। तदवधिं यावत् प्रतीक्षन्तामिति दिक्।

( रेडियोवार्ताप्रसारणमपक्षीयते। सर्वेऽपि श्रोतारः सकरतालं सोल्लासं [4]त्रिवर्णध्वजजयनादं भारतवसुन्धराजयनादञ्च घोषयन्तो नृत्यन्ति कूर्दन्ति )

चतुर्धुरीणः[5] ( श्मश्रूणि सारयन् सोत्कण्ठम् )

गोविन्द! त्वं तावत् प्रयागविश्वविद्यालयेऽध्ययनं करोषि। तव कृतेऽवश्यमेव सर्वं वृत्तं हस्तामलकमिव भविष्यति।

गोविन्दः ( सविनयं सस्मितम् )

तात चतुर्धुरीण! अलं प्रहेलिकया। विवक्षितं तावत् स्फुटमुपनयतु भवान्! किं प्रष्टुं वाञ्छति?

चतुर्धुरीणः वत्स! एतावदेव यत्किन्नु कारणमस्य युद्धस्य? कथं खलु शान्तिप्रियं विकासोन्मुखं संघनिरपेक्षं भारतमुद्वेजयति पाकिस्तानदेशः? एते हि हृदयहीनाः बर्बराः मातृभूमिं विखण्ड्य पृथग्देशं कृतवन्तः। जाने कियतः [6]शिष्यधर्मावलम्बिनः [7]पञ्चनदीयान् हिन्दून् स्वगृहाद् वियोज्य निष्कासितवन्तो व्यापादितवन्तश्च। खण्डितोऽयं भारतदेशः। वङ्गा विभक्ताः, पञ्चनदा विभक्ताः, परकीयोऽभूत् सिन्धुदेशः। विभाजने सम्पन्नेऽपि भारतं पाकिस्तानाय पञ्चपञ्चाशत् कोटिमितानि रूप्यकाणि क्षतिपूर्तिव्याजेन प्रायच्छत्। सर्वमिदं दृष्टं मया वत्स! किमधिकम्,

आक्रान्तारोऽपि सन्तो भरतभुवमिमां स्वामहो मन्यमानाः
शाहंशाहाभिधाना मुगलनृपतयोऽकब्बराद्यामहान्तः।
स्थापत्यं रक्षमाणाः स्वविजयकथया मण्डयाञ्चक्रुरेव
तद्वंशीयास्तुरुष्का अवनिमनुपमां तेऽन्यथा कल्पयन्ति ॥४॥

---

१. Goa ( गोवा )। २. सिक्किम। ३. मेजर त्यागी की पत्नी का नाम कविता है। ४. तिरङ्गे झण्डे की जय। ५. चौधरी। ६. सिख। ७. पञ्जाबी।

गोविन्दः (आश्वस्तः सन्)

युक्तमाह भवान्! पितामह, यन्मया सम्प्रति सश्रमं सम्पठ्य ज्ञायते ततोऽप्यधिकं भवता प्रत्यक्षीकृतम्। अतएव प्रचण्डमार्तण्डाय दीपदर्शनकल्पमिदं मत्कृतं ज्ञापनम्। तथाप्यस्मिन् सन्दर्भे किञ्चित्कथयितुमिच्छामि।

चतुर्धुरीणः (किञ्चिदग्रेसरीभूय)

अवश्यम्, अवश्यं कथय वत्स!

गोविन्दः पितामह! विदितचरोऽयं वृत्तान्तो भवतोऽपि यत्पाकिस्तानेनिर्मितिः केवलं गौराङ्गनयवर्त्मवशीकृतचेतनस्य जिन्नामहोदयस्य नमस्तुमकरनाऽऽसीत्।

चतुर्धुरीणः (सग्रीवान्दोलनम्)

बाढम्, बाढम्। यदि नामैवं नाभविष्यत् तर्हि कथं खल्वद्यापि षट्कोटिमितास्तुरुष्का भारतदेश एव भवेयुः।

गोविन्दः परन्तु निर्मितोऽपि, संस्थापितोऽपि, विविधसंयन्त्रनिर्मितोऽपि, [1]अम्बरीषदेशाद्दास्यमुपगतोऽपि लोकतन्त्रविरोधी पाकिस्तानदेशोऽन्नजलसुरक्षाभाववशादद्यापि स्थिरतां नोपयाति।

चतुर्धुरीणः शोभनमुच्यते वत्स! श्रुतम्मया यद्वङ्गदेशीयास्तुरुष्का अपि पृथग भवितुमिच्छन्ति। प्रतीच्यपाकदेशेऽपि खुदाईखिदमतगारनाम्ना विख्यातायाः संस्थायाः वृद्धनायकः सीमान्तगान्धी पख्तूनानां कृते स्वायत्ततां याचमानो निरङ्कुशैः पाकदेशशासकैः कारागारे शृङ्खलितः।

गोविन्दः (साश्चर्यम्)

पितामह! मतोऽप्यधिकं ज्ञायते। साधु भणितं भवता। पाकिस्तानदेशे मात्स्यन्यायः प्रचलति। य एव राजनीतिमहावृक्षः क्षुपानभिभूयातिवर्द्धते स एव [2]द्विनालीकगुलिकया सर्वजनसमक्षं निपात्यते। इस्कन्दरमिर्जा......... लियाकतअली........ विघातक्रमेऽस्मिन् न जाने कियन्तो महानुभावा अग्रेऽपि समागमिष्यन्ति। मन्ये,



१. अमरीका। २. बन्दूक की गोली से।

छलदुरितविधानैस्सोदरान् घातयित्वा
निरतिशयसुखाढ्यां खण्डयित्वा धरित्रीम् ।
ऋतसरणिविरोधी पाकदेशोऽभिशापं
ह्यनुभवति नितान्तं भारतीयाचलायाः ॥५॥

चतुर्धुरीणः वत्स गोविन्द ! बन्धुद्रोहिणां रावणायमाणानामियमेव गतिः । मधुरं भवति सन्तोषस्य फलम् ! भगवतो गृहे कामं विलम्बोऽस्तु, न तावदब्रह्मण्यम्[1] ।

गोविन्दः साधूक्तं भवता । इदानीं पाकिस्तानदेशस्य सेनानीराष्ट्राध्यक्षोऽयूबखानोऽपि पूर्वपरम्परां निर्वहन् धृतभारतमत्सरो युद्धकण्डूतिमनुभवति । आत्मप्रवञ्चनेयं राष्ट्रप्रवञ्चनेयम् । युद्धविपत्तिं संघोष्य देशवासिनां मनश्चेतनाया विषयान्तरोन्मुखीकरणमेव पाकशासकानामन्तिम आत्मरक्षोपायः । पश्यतु भवान्,

काश्मीरं संकटापन्नं सीमाऽस्माकं ह्यरक्षिता ।
भारतं विरुणद्ध्यस्मान्भारतं विजुगुप्सते ॥६॥
एकीभवत रक्षायै इस्लामोऽप्यभिभूयते
इति धर्म्याय युद्धाय धर्मान्धान् प्रेरयन्ति ते ॥७॥

चतुर्धुरीणः वत्स ! प्रत्यक्षरं सत्यमुक्तं त्वया । हृच्छूलायते काश्मीरम् । अक्षिकण्टकायते काश्मीरम् । रसनामृतायते काश्मीरम् ! काश्मीरं विना पाकिस्तानदेशो न स्वास्थ्यमनुभवति । यतो हि १९४८ मिते ख्रिस्ताब्द एव प्रथमवारं तेनासच्चेष्टया काश्मीरविजयार्थं प्रयतितम् । परन्तु लौहपुरुषाणामस्माकं गृहमन्त्रिणां पटेलमहाभागानां कण्ठीरवोद्घोषमात्रेण क्षेत्रपुरुषायमाणाः[2] पाकदेशसैनिकाः पलायाञ्चक्रुः । एतस्मिन्नवसरे किं भविष्यति द्रष्टव्यमिदम् !

गोविन्दः मन्ये, पुनरपि विजयश्रीः भारतमूरीकरिष्यति । भारतवीराणां शौर्यन्तु जगत्प्रसिद्धम् । मातृभूमिरक्षायै प्राणानपि पणीकृत्य योद्धुं जानन्ति भारतीयसैनिकाः । काश्मीरं पुनः भारतजनन्याः ललाटपट्टककाश्मीरमेव ! कथं तावत् कविताकुङ्कुमप्ररोहस्थलं शारदादेशं तं केनचिल्लुण्ठाकापसदेन न्यक्क्रियमाणं द्रष्टुं शक्नुमो वयम् ? ( घटिकायन्त्रं विलोक्य )

---

१. भगवान् के घर में देर भले हो परन्तु अन्धेर नहीं होती ! २. धोख सरीखे ।

अये, पञ्चदशकला व्यतीताः ! पुनरपि रेडियोप्रसारणं शृणुमः ।
( गोविन्दो रेडियोयन्त्रं प्रेरयति । इत्थं श्रूयते )
इदमाकाशवाण्या इलाहाबादवाराणसीलखनऊकेन्द्रम् । सम्प्रति भवन्तः समरेतिवृत्तं शृण्वन्तु । अस्माकं वाहिनी प्रायः सर्वत्रैव पाकिस्तानसैन्यं सञ्चूर्णयन्ती नितरामग्रेसरति । युद्धेऽस्मिन् निखिलोऽपि देशो दत्तचित्तः । उत्तरप्रदेशराज्यं पुनः विशेषेण योगं ददाति ।
तदिदानीं प्रस्तूयते सामयिको निबन्धः । अस्य शीर्षकं विद्यते—भारतपाकयुद्धे संलग्नानाम् उत्तरप्रदेशीयसैन्यवीराणां परिचयः । अद्यास्मिन् निबन्धे येषां प्रमुखसैन्यसञ्चालकानां गुल्मपतीनां परिचयो दीयते क्रमेण तेषां नामानि शृण्वन्तु भवन्तः । मेजर आशारामत्यागी, हवलदार अब्दुलहमीदः, मेजर रणवीरसिंहः लेफ्टीनेण्ट सुखवीरसिंहः, सेकिण्डलेफ्टीनेण्ट जबरसिंहः, विमानचालकः ट्रेवरकीलरः, स्क्वाड्रनलीडर डेनजीलकीलरश्च ।
( सर्वेऽपि श्रोतारो हर्षातिरेकशिथिलगतयस्सन्तो रेडियोयन्त्राभिमुखीभूय तिष्ठन्ति ।
लोहपुरविजयद्वारभूते डोगराईक्षेत्रे सैन्यसञ्चालननिरतस्य गुल्मपतेर्मेजरआशारामत्यागिनो जन्मोत्तरप्रदेशस्थमयराष्ट्र ( मेरठ ) जनपदे फतेहपुरनाम्नि ग्रामेऽष्टात्रिंशदधिकोनविंशतिशततमे (१९३८) ख्रिस्ताब्देऽभवत् । अस्य पितृचरणश्श्रीसगुआसिंहत्यागीमहोदयः सम्प्रति फतेहपुरग्रामप्रधानमास्ते ।

चतुर्धुरीणः ( गर्वोन्नतस्सन् )
साधु वत्स साधु ! पवित्रीकृतं त्वयाऽस्माकं जनपदं मयराष्ट्रम् !
(पुनश्श्रूयते )
देशप्रेमसमाजसेवादिभव्यभावसंवलितो द्वाविंशतिवर्षदेशीयोऽयं युवको मोदीनगरे मयराष्ट्रनगरे च विद्याध्ययनं परिसमाप्य एम्० ए० परीक्षाञ्चोत्तीर्य भारतीयसेनायां प्रविष्टः । तत्रापि च षोडशवर्षाभ्युपेयां पदोन्नतिं वर्षचतुष्टयमात्रेणैव समवाप्य मेजरपदेऽभिषिक्तः । अस्मिन्नेव सत्रे जूनमासस्य सप्तविंशतितारिकायां ( २७ जून ६५ ई० ) एम्० ए० परीक्षोत्तीर्णया कवितादेव्या सार्धमस्य सैन्यवीरस्य पाणिग्रहणं सम्पन्नम् ।

सितम्बरमासस्य प्रथमतारिकायामेव सम्प्रवृत्ते भारतपाकसमरे सैन्यवीरोऽयं नियुक्तो डोगराईक्षेत्रे । इतस्तावल्लोहपुरं नातिदवीयो वर्तते ।

विजयाभियाननिदेशं सादरं स्वीकृत्य मेजरआशारामत्यागी जाटवाहिन्या मण्डलत्रयेण परिवृतस्सन् सितम्बरमासस्यैकविंशतितमे दिवसे ( २१ सितम्बर ) लखनाग्राममाक्रम्य तं सरलतयैवाध्यकार्षीत् । तदनन्तरञ्चापि नितरामग्रेसरन्निच्छोगिलकुल्यातटमुपेतस्साम्प्रतम् अरातिगतिविधिं साधु निरीक्षते । सम्मुखं विद्यते डोगराईनगरम्, यद्रक्षणार्थं पाकिस्तानसेनायाः पठानवाहिनी पञ्चनदवाहिनी[1] च बद्धपरिकरे स्तः । एवमाशास्यते यदद्यैव तत्र निर्णायकं युद्धं भविता ।

सुनिश्चितं खल्वस्माकं सैन्यप्रमुखस्य साफल्यम् !

( कतिचित्कलां यावद् विलम्ब्य )

हवलदार अब्दुलहमीदोऽपि प्रदेशस्यास्यैव रत्नम् ( इत्यर्धोक्ते )

गोविन्दः पितामह ! किमनेन श्रुतिविस्तरेण ? सैन्यवीराणां परिचयेनापरिचयेन वा किम् । अद्यतना युद्धसमाचारा एव कर्णगोचरीकर्तव्याः । अतएवान्यत् किमपि प्रसारणकेन्द्रं योजयामि ।

चतुर्धुरीणः अवितथं भणसि वत्स । एषोऽवहितोऽस्मि ।

( गोविन्दो योजयितुमुपक्रमते प्रसारणकेन्द्रान्तरम् )

( इति प्रस्तावना )

उद्घोषकः ( नेपथ्ये )

भारतपाकिस्तानयुद्धस्य पञ्चविंशतितमोऽद्य दिवसः । जाटवाहिन्याः मण्डलत्रयेण संवर्धितविक्रमो मेजरआशारामत्यागी डोगराईविजयार्थमेव सम्प्रतिष्ठते । विकटमिदं युद्धक्षेत्रम् । इच्छोगिलकुल्यातटेषु तावदन्तराऽन्तरा शत्रुभिः शतमितानि गूढलघुदुर्गाणि ( पिलबॉक्स ) निर्मितानि सन्ति यस्माद्धि पदात्पदमपि प्रवर्तमाने प्राणभयं वरीवर्ति । प्रत्येकस्मिन् धरान्तःस्थिते लघुदुर्गे शतघ्नीत्रयं तद्योजकत्रयञ्चापि सन्निहितम् । परन्तु किमनेन,

---

१. Pathan and Punjab Regiments.

ढौकन्ते सांयुगीना अरिविजयधिया भूरिचञ्चच्छिरस्त्राः
अत्यन्तीनास्सहेलं श्रितभरतधरामृत्तिकापक्षपाताः ।
सन्नद्धाश्शस्त्रनद्धास्समरमखमहे प्राणदीक्षानुबद्धाः
सम्बद्धाः प्रीतिभावैस्स्वजनपदभुवां शत्रुशाठ्यप्रविद्धाः ॥८॥

तद् वयमपि प्रशास्महे नमोवाकं भारतविजयश्रियै । विजयतां सैन्यवीरो मेजर आशारामत्यागी । शिवास्तस्य पन्थानस्सन्तु !!

( इच्छोगिलकुल्यायाः समीपमेव जाटवाहिन्याः निवेशस्थलम् । मेजरआशारामत्यागी युद्धोचितवेषं परिधाय सम्मुखस्थितं राष्ट्रध्वजं त्रिवर्णं प्रणम्य किञ्चिदवनम्य च दक्षिणेन पाणिना भूमृत्तिकामुत्पाद्य प्रदर्शयन् सैनिकान् प्रति )

मत्प्रियाः बन्धवो भारतसैनिकाः ! पश्यन्तु भवन्तः । इयमस्माकं जन्मभूमि-मृत्तिका । अस्यामेव वयं समुत्पन्नाः सम्पोषिताः संवर्धिताः । अस्माकं धमनीषु भारतराष्ट्रमृत्तिकाया एव जलान्नं रक्तीभूय प्रवहन्तितराम् । पाकिस्तानसीमायां प्रविष्टा वयम् । किन्त्वियमपि मृत्तिकाऽस्माकमेव । इयमेव तावत्सिन्धुसभ्यतायास्स्थली । अत्रैव सरस्वतीतटेऽस्मत्पूर्वजैर्वेदमंत्रा उच्चारिताः । आर्यजनैरत्रैव सत्यरक्षार्थं दाशराज्ञयुद्धं प्रारब्धम् ।

अद्य जन्मभूमिः स्वकीयम् ऋणं याचते । आत्मायं सनातनः । शरीरमेव नश्वरम् । गृहे स्थितोऽपि, विषयवासनामज्जितोऽपि जनो म्रियते एव । परन्तु छत्रपतिपुत्रा राणाप्रतापकुलजा अशफाकुल्लावंशधरा वा न कातरीभूय छागीभूय मेषीभूय कीटीभूय प्राणांस्त्यजन्ति । वीरपुत्राणां वीरगतिर्भवति, स्वर्गलोकश्च प्राप्यते !

मत्सङ्गिनः, तदलं विलम्बेन ! परीक्षावेलेयं पुरुषार्थस्य ! राष्ट्रमृत्तिकायास्समर्चनं रक्तदानेन प्राणदानेन वा क्रियताम् । अहमग्रेसरी भवामि । यूयं सर्वे मन्निर्देशानुसारं शत्रुवाहिनीं परितोऽपि समाच्छाद्य विनाशयत । सम्प्रति मदुच्चारितंवाक्यमनुवदत,

हर हर महादेवऽऽऽऽऽ
जाटाँ दी फतहऽऽऽऽऽ....

( निखिलमपि सैन्यं समुच्छलितोत्साहमनुवदति )

वल्लभरामशास्त्री पेशाविन् मुहूर्तमागतस्तावत् । रक्षासूत्रं भालतिलकञ्च विधास्ये । मङ्गलमयेयं विजयप्रदायिनी । प्रस्थातव्यमधुना ।

(इति आशारामस्य दक्षिणमणिबन्धे समन्त्रोच्चारणं रक्षासूत्रं बध्नाति, दधिरक्ततण्डुलैर्भाले तिलकञ्च रचयति । आशारामस्सादरं प्रणमति )

वल्लभरामशास्त्री विजयस्व वत्स !

आशारामत्यागी ( सोत्साहं सत्वरम् )

राजेन्द्रसिंह ! उमरावसिंह !! किमुच्यते युवाभ्याम् ?

राजेन्द्रसिंहः मेजर ! वयं सर्वेऽपि प्राणान् पणीकृत्य भवदनुगमिष्यामः । पाकसैनिकाः द्रक्ष्यन्ति सम्प्रति शौर्यपराक्रममस्माकम् । तदलं विलम्बेन ! प्रस्थातव्यमधुना ।

( पुनरपि 'हर हर महादेव'......'जाटाँ दी फतह' इति ध्वनिर्नभोविदारं श्रूयते । व्यूढकङ्कटाःसैनिका आग्नेयास्त्राणि हस्तयोर्गृहीत्वा क्वचिन्मण्डलीभूय क्वचिदेकलीभूय वा द्रुतमग्रे धावन्ति । प्रारभते खलु तुमुलयुद्धम् । श्रूयतेऽनारतं शतघ्नीविस्फोटध्वनिः । द्विनालीकगुलिकास्सनत्कारमभितः परितश्चावकाशं विध्यन्त्यः प्रवर्तन्ते )

आशारामत्यागी ( दूरवीक्षणयन्त्रेण सम्मुखमवलोक्य सोद्वेगम् )

उमरावसिंह ! पश्य तावत् ! शत्रुभिः किमन्नृशंसमाचर्यते ? सत्यमेवैते बर्बरतुरुष्काः सर्वथा हृदयहीना भवन्ति ।

उमरावसिंहः ( ससम्भ्रमम् ) श्रीमन् किमापतितम् अनर्थकरम् ?

आशारामत्यागी अलं पृच्छया । स्वयमेव तावत्पश्य । शतघ्नीमुखेभ्यो ज्वलदग्निपिण्डान् उद्वमन्ति दुर्दान्तटैङ्कयानानि एकादशमितानि दुर्वारगत्येत एवागच्छन्ति । पश्य तावत् !

( इति दूरवीक्षणं प्रयच्छत्युमरावसिंहाय )

उमरावसिंहः ( तथा कृत्वा सभयं सोद्वेगञ्च )

मेजर ! सम्प्रति प्रातरेव प्रलयसन्ध्योपस्थिता । अस्मच्चतुर्गुणां सैन्यशक्तिं प्रयुनक्ति शत्रुपक्षः ।

आशारामत्यागी वीर ! अलं कातर्येण । मयि आशारामे जीवति नैराश्यं मा स्म गमः । एष गच्छामि ।

( इति सैन्ययानाद्बहिर्विकूर्द्य टैङ्कयानध्वंसिगोलकानि च ग्रीवावलम्बिवस्त्रपुटे निधाय गन्तुमिच्छति )

उमरावसिंहः ( सवेगम् आशारामं पाणिभ्यामावध्य )

श्रीमन् ! किमिदमनर्थमुपकल्प्यते ? मयि जीवति नेदं सम्भवम् । मादृशाः क्षुद्रसैनिकास्तु जायन्ते म्रियन्ते, लक्षमिताश्च सन्ति भारतदेशे ! परन्तु भवादृशं प्रत्युत्पन्नमतिपरायणं विलक्षणसैन्य-सञ्चारमेवं महावीरं प्रणाश्य भारतवसुन्धरा निर्वत्सोत्सङ्गा भविष्यति ।

तदुमरावसिंहोऽयं प्रयाति मातृभूमिरक्षायै ।

आशारामत्यागी ( साधिकारम् )

उमरावसिंह ! मा विस्मर सैन्याचारसंहिताम् ! त्वं तावन्ममाधिकारे तिष्ठसि । अलं ममत्वेन !

उमरावसिंहः ( नेत्राभ्यामश्रूणि पातयन् सदैन्यम् )

श्रीमन् ! मेजर ! ममाधिकृत ! मासद्वयपूर्वमेव भवत्परिणीतां भार्यान्तावत् चिन्तयतु भवान् ।

आशारामत्यागी ( द्रुतगत्या धावन् )

उमरावसिंह ! जीवने रक्षिते सति पुनर्मिलिष्यामो वयम् । विजयतां भारतजननी ! विजयतां भारतराष्ट्रम् ! हर हर महादेवऽऽऽ जाटाँ दी फतहऽऽऽऽ

( पाकिस्तानस्य टैङ्कयानानि समीपमुपयान्ति । लक्ष्यवृत्ते समायात एव त्यागी वस्त्रपुटादाग्नेयपिण्डमेकं गृहीत्वा यावच्छक्तिवेगं प्रक्षिपति । क्षणानन्तरमेव टैङ्कयानं ज्वलदनलपरीतं संलक्ष्यते । करुणं क्रोशन्तो मृत्युव्यथां नाटयन्तश्च टैङ्कारोहिणस्सैनिकाः पञ्चत्वमुपयान्ति )

आशारामत्यागी ( स्वगतम् ) सुरक्षितमिदम् उच्चावचभूमिस्थलम् । अत्र तावत् सर्पीभूय लक्ष्यवेधमाचरन् शत्रुभिस्सप्रयत्नमपि न लक्षिष्ये ।

( अकस्मादेव सम्मुखं पश्यन् )

अये ! सार्धमेव पञ्चषाणि टैङ्कयानानि समायन्ति !

( सस्मितम् )

विजयतां करुणावरुणालयः ! सुप्तस्य सिंहस्य मुखे मृगाः स्वयमेव प्रविशन्ति ? एते भाग्यहतका न जानन्ति यन्महिषवाहनो भगवान् यमोऽत्रैव आशारामीभूय प्रच्छन्नः !

( सोल्लुण्ठम् )

आयात मे प्रतिवेशिनः ! आयात !! एष सज्जोऽस्ति तेऽभिनन्दनार्थं त्वत्प्राणचिन्तको मृत्युः !!

( टैङ्कयानानि पुरस्सरन्ति । निपुणं निरीक्ष्याशारामोऽप्रतिहतगत्या सततान्नेयगोलकक्षेपणैस्तानि ध्वंसयति । दारुणं चीत्कारपलायन-प्राणत्यागध्वनिः प्रसरति । उत्पतिष्णून्यर्चींषि ज्वलट्टैङ्कानलानां सन्दृश्यन्ते )

आशारामत्यागी ( हर्षातिरेकमनुभवन् प्रकटीभूय साट्टहासम् )

क्व गतोऽसि प्रतिवेशिन् ! न दृश्यसे साम्प्रतम् !! क्षेत्रमिदानीं निर्मक्षिकं जातम् ।

( अकस्मादेव द्विनालीकगुलिकासारेण वक्षो विदीर्यते )

आशारामत्यागी ( वामहस्तेन वक्षोरुधिरमुपरुन्धन् भूमौ निपतति )

हा मातृभूमे ! किमिदम् । जननि ! न त्वत्सेवयेदानीमपि आशा-रामस्य तृप्तिः । तत्कथमशक्तीकृतोऽस्मि !

( समक्षं पुनरपि टैङ्कयानं दृष्ट्वा )

मन्ये एभिरेव सन्दृष्टः प्रविद्धोऽस्मि । भवतु, फलमपि झटिति दास्यामि ।

( शम्पावेगादुत्प्लुत्य टैङ्कयानमाक्रमते ध्वंसयति च । उच्छ्रिखाग्नि-ज्वालाभिर्नितरां सन्दग्धा भस्मीभवन्ति तुरुष्काः )

आशारामत्यागी ( मूर्च्छामनुभवन् धरामाश्रयते )

भारतजननि ! एष ते वत्सस्तवोत्सङ्गमाश्रयते । मातः ! वक्षो-रुधिरैस्समर्च्यते मया ते मृत्तिका । अम्ब ! वरम्मे देहि, यदा यदा मे जननं जायेत, तदा तदाऽनेनैव प्रकारेण त्वत्सेवायां प्राणा अर्पिताः भवेयुः !

उद्घोषकः ( नेपथ्ये )

विजयतां विजयतां भारतजननी ! अधिकृतं डोगराईनगरं भारतीय-सैनिकवीरैः । पलायिताः युद्धसामग्रीं प्रभूतां परित्यज्य पाक-सैनिकाः । भिन्नानि तेषां भूगर्भदुर्गाणि ( पिलबॉक्स ), इच्छोगि-लकुल्याऽप्यतिक्रान्ता । साम्प्रतं डोगराईमध्ये दोधूयते त्रिवर्णध्वजः ( तिरंगा झण्डा ) भारतस्य !

आशारामत्यागी ( रोमाञ्चमनुभवन् )

साम्प्रतं सानन्दं प्राणांस्त्यक्ष्यामि ( इति मूर्च्छति )

उद्घोषकः ( नेपथ्ये )

ध्वस्तं येन दशद्वयं समधिकं द्वाभ्यां नु टैङ्काभिधं
यानं पाकवरूथिनीविभवदं हौरेकमालेऽनघः ।
क्वासौ गुल्मपतिः प्रवीरसुभटो जाटध्वजिन्यग्रणीः
आशाराम इति व्यथार्तमनसा युद्धाङ्गणं वीक्ष्यते ॥९॥

आशारामत्यागी ( चेतनालेशमवाप्य )

अये ! मदन्वेषणपरायणाःगुल्मसैनिकाः व्यर्थमेवानर्थाशङ्किनो दुःखमनुभवन्ति !

( उत्थातुमिच्छन् सदैन्यम् )

आः रे दैव ! किं करोमि मन्दभाग्यः ? उत्थातुमपि न प्रभवामि ! भवतु, रिवाल्वरगुलिकां विस्फोट्य सङ्केतयामि ।

( इति सश्रमं रिवाल्वरविस्फोटनं विदधाति । अकस्मादेव विस्फोटशब्दमाकर्ण्य परश्शताःसैनिकाः धावन्तस्समायान्ति, गुल्मपतिं जीवितञ्च दृष्ट्वा महता हर्षसम्मोदभरेण द्विनजिकाः स्कन्धेष्वारोप्य नर्तितुं गातुञ्चारभन्ते )

उमरावसिंहः ( जनसम्मर्दमतिक्रम्य मेजरप्रमुखमुपसृत्य क्षतविक्षतञ्च विलोक्य सपरिदेवनम् )

श्रीमन् ! ममानुरोधो नाङ्गीकृतो भवता निरनुक्रोशेन । साम्प्रतमियं श्रीमतो दशा ?

( इति पटाञ्चलेन मुखमावृत्य करुणं रोदिति, सर्वेऽपि सैनिकाः गाद्गभवन्ति )

आशारामत्यागी ( सस्नेहम् )

उमरावसिंह ! मत्प्रियाः सैनिकबन्धवः !! कोऽयं भवतां व्यामोहो विसर्जनवेलायाम् ? मातृभूमेः सुमहान्तम् ऋणं प्रत्यादाय सन्तोषमनुभवति मेऽन्तरात्मा ! भूयोऽपि विजयं कामये भवताम् ।

राजेन्द्रसिंहः ( सत्वरमुपेत्य

उमरावसिंह ! अलं विलम्बेन । अनर्थसम्पातो भविष्यति । सैन्यवाष्पयानं मयानीतं सज्जं वर्तते । तदेहि, मेजरमहाभागं तस्मिन्निवेश्य अमृतसरनगरस्थिते सैन्योषधालये नयावः ।

उमरावसिंह : ( सधैर्यम् )

साधु भणितं त्वया । झटितिकरणीयमिदं कार्यम् ।

आशारामत्यागी ( सशौर्यं समुत्थापितैकपार्श्वस्सन् )

उमरावसिंह ! तिष्ठ मुहूर्तमात्रम् । साम्प्रतं समाप्ता जिजीविषा । मध्येपथमपि मृत्युर्मे सम्भवति । तत्सावधानं मत्सन्देशमवधार्य मयि दिवङ्गते सति तदनुकूलं कुर्याः ।

उमरावसिंहः ( करुणं विलप्य )

एषोऽवहितोऽस्मि । सन्दिशतु सैन्यवीरः ।

आशारामत्यागी ( किञ्चिद् विमृश्य )

निष्प्राणं मच्छरीरं नीयतां मज्जनपदग्रामे यथा मे पितरौ तदालोड्य विलोड्य निपुणमवेक्षेतामवगच्छताञ्च यत्तयोः पुत्रेण मेजरआशारामत्यागिना सर्वा एव गुलिकाः वक्षःस्थलोपर्येव सोढ़ाः पृष्ठोपरि नैकापि ! उमरावसिंह ! इयमेव मदाकांक्षा,

प्रत्येकं जनिरस्तु मानवकुले शौर्यव्रते शंसिते
प्रत्येकं जननञ्च मे प्रभवतादस्मिन्नवे भारते ।
एवं स्यान्निधनञ्च मित्रपरिधौ भूमिस्थले कोमले
नान्या कापि सुखावहा परतराऽऽकांक्षा मदीया सखे !!१०।।

साम्प्रतं जलंनिपाय्य यथारुचितं कुरु !

( सोच्छ्वासं वेदनामभिनीय )

वि······घि······विजयतां······मे······माऽऽर······तम् !!

( इति मूर्च्छति )

## पात्रपरिचयः

सूत्रधारः ( नाट्यप्रस्तावकः )

इन्दुप्रकाशः ( महोत्सवायोजकः )

प्रमुखः ( विकासखण्डप्रमुखः महोत्सवमुख्यातिथिः )

आलोकः ( कथानायकः )

शिरोमणिः ( आलोकस्य पिता )

लक्ष्मीः ( आलोकस्य माता )

रचनाकालः मई १९७९ ई० ।

( उत्तरप्रदेशस्य जौनपुरजनपदे स्थितम् उपस्यन्दिकापगं ग्रामस्थानं द्रोणीपुरम् । ग्रामाद् बहिः पश्चिमायां दिशि निरन्तरालम् आम्रवणं दृश्यते । मध्ये मध्ये च मधुपजम्बूतिन्तिडीतालवृक्षाश्चापि क्वाचित्कतयाऽवलोक्यन्ते ।

आम्रवणस्य दक्षिणभागे मृत्तिकाचत्वरोपरि सुविशालं वितानं शोभते । वितानमण्डपस्याग्रवर्तिनि भागे युवारङ्गमञ्च, द्रोणीपुर, जौनपुरेति हिन्दीभाषोट्टङ्कितप्रलेखमण्डितं धवलवस्त्रपट्टकं किञ्चिद्दोधूयमानं परिलक्ष्यते ।

मृत्तिकाचत्वरस्य पुरतो हस्तिनखे विस्तृतभूमिभागे ग्रामीणाः जनाः दिदृक्षुमुद्रोत्कण्ठिता स्तिष्ठन्ति । जनसम्मर्दमध्ये रङ्गमञ्चनिष्क्रियत्वोद्वेजितानां स्तनन्धयबालशिशुकुमाराणामस्फुटालापः स्फारीभवति । अस्माकदेव नैःशब्द्यं प्रभवति । ध्वनिविस्तारकयन्त्रादनुश्रूयते सन्देशः । सर्वेऽवहिताः जायन्ते )

इन्दुप्रकाशः अयि भो। परमश्रद्धेयाः सहृदया अस्मद्ग्रामजनाः ! मन्ये कार्यक्रमस्यालसविलम्बितेन भवन्तस्सर्वे समुद्विग्ना। वर्तन्ते । परन्तु विलीयते इदानीं नैराश्यकुज्झटिका भवताम् । एतेऽस्माकं विकासखण्डप्रमुखसहोदयाः राराज्यन्तेऽधिमञ्चम् ।

द्रोणीपुरनवयुवकरङ्गमञ्चस्य तत्त्वावधाने समायोजितेऽस्मिन् ग्रामोन्नतिप्रचारशिबिरस्य समापनमहोत्सवे समागतानां मुख्यातिथ्यपदमलङ्कुर्वाणानां श्रीप्रमुखमहाभागानां हार्दिकम् अभिनन्दनं भवद्वशंवदीभूय कुर्मो वयम् । सुमहतो विलम्बस्य कृते भवतामपि प्रसादनं प्रार्थये ।

साम्प्रतं प्रमुखमहाभागाः प्रार्थ्यन्तेऽस्माभिः महोत्सवोद्घाटनार्थम् ।

( प्रमुखमहोदया आसन्दिकातः समुत्थाय पुरतोऽभिवर्तन्ते । हस्तेनैकेन ध्वनियन्त्रदण्डमवलम्ब्य ग्रीवामुन्नमय्य सस्मितम् )

अयि भोः द्रोणीपुरग्रामवास्तव्याः बन्धवो भगिन्यश्च ! भवत्स्नेहसौजन्यवशीकृतोऽहमेष मदुत्पन्नक्लेशोद्वेगार्थं क्षमाततिं याचे । वाष्पयानयन्त्रदोषवशात् कथमप्यनपेक्षितोऽप्रत्याशितश्च विलम्बस्समजायतेति स्वयमपि व्रीडितोऽस्मि ।

अस्मद्विकासखण्डे भवतां ग्रामोऽयं सर्वेषु क्षेत्रेषु पुरस्सरो वरी-

  

वर्तीति जायते सुमहान् सन्तोषोऽस्माकमपि । एतद्ग्रामधराप्रसूताः नैके भाग्यवन्तो जनाः साम्प्रतं प्रदेशे देशे च प्रख्याताः लब्धप्रतिष्ठाः वर्तन्ते ।

श्रीमन्तः, इदमप्यस्य ग्रामस्याप्रतिमं गौरवं यदद्यास्मिन् महोत्सवेऽभिनीयमानं लघुरूपकं छलिताधमर्णम् श्रीमदभिराजराजेन्द्रमिश्रप्रणीतं वर्तते यः खलु काव्यपाथोनिधितितीर्षुः कृतकविताकामिनीकुचकलशद्वयोडुपोऽस्मिन्नेव ग्रामोत्सङ्गे समुत्पन्नः । एवं खलु मयाऽपि कर्णपथातिथीकृतम् यत्,

भोजात् षष्ठोऽनुसूतो गुणमणिवलयात्पञ्चमश्शीतलाद्यः
काशीरामाच्चतुर्थो बहलबलयुताच्छ्रीदुलारात्तृतीयः ।
रामानन्दाद्द्वितीयो ननु पितृचरणादादिमः स्वर्गसंस्थात्
श्रीमद्दुर्गाप्रसादाच्छ्रितविनयपथः सोऽस्ति राजेन्द्रमिश्रः ॥१॥

अपि च

सर्वस्वं जीवनस्यादितिगुणभरितां मातरं मन्यमानः
शान्तां क्लान्ताभिराजीं त्रितनयजननीं सोदरस्नेहसक्तः ।
गोविन्दाङ्घ्रिप्रलीनोऽसुहृदिह सततं कृच्छ्रकौलीनवात्यां
चञ्चच्चामीकराभो ज्वलनहृतमलस्सोऽमलस्स्याच्छतायुः ॥२॥

तदहमपि नाट्यदर्शनसमुत्सुकानां भवतां द्विदलभक्तप्रतिमाणां मध्ये न तावन्मुसलीभविष्यामि । पुनरप्येकवारं भवद्भ्यो धन्यवादान् वितरामि ।

( सहृदयसम्मर्दे करतलध्वनिः प्रभवति नेपथ्येऽनुश्रूयते )

भो भोः सहृदयजनाः साम्प्रतं प्रस्तूयतेऽस्माभिः अभिराजडॉक्टरराजेन्द्रमिश्रप्रणीतम् एकाङ्किरूपकं छलिताधमर्णं नाम । अधमर्णः पुत्रः उत्तमर्णेन पित्रा केन प्रकारेण छलितः इत्ययमेवाभिप्रायोऽस्य रूपकस्य । समाजे साम्प्रतं···

( इत्यर्धोक्त एव जवनिकाभ्यन्तराच्छ्रूयते )

समाजे साम्प्रतं यत्प्रवर्तते तदावां निवेदयावहेऽभिनयमुखेन न खलु वचसा ।

सूत्रधारः ( व्रीडामर्षञ्च नाटयित्वा )

अये प्रथमस्थान एव मक्षिकापातः। मन्ये मन्निवेदिता प्रस्तावना न केवलं सहृदयेभ्य एवापितु मन्मित्रेभ्योऽपि न रोचते। का गतिः? एष गच्छामि। ( इत्यपक्रामति )

( ततः प्रविशति अम्बया भगिन्या मित्रेण च सार्धं विवदमानो द्वाविंशतिवर्षदेशीयः कश्चित् सुदर्शनो युवकः )

आलोकः अम्ब! कथितम्मया सहस्रवारं यन्न तया मूढजरठया सार्धं विवाहं करिष्यामि। किन्नु खलु भवती वृथैव मां क्लेशयति?

लक्ष्मीः आलोक! जानामि वत्स! त्वदीयमादर्शम्। अनुभवामि तावकीं व्यथाम्। परन्तु किं करोमि? पतिपुत्रयोर्मध्येऽहमेषा घरट्टशिला-युगलावकाशे भिद्यमाना गोधूमततिरिव चूर्णीभवामि! का मे गतिः?

आलोकः ( जननीमासने समुपवेशयन् )

अम्ब! निषीदतु भवती मुहूर्तमात्रमत्रासने। एषोऽहं भवतीमवगतार्थां करोमि।

( भगिनीं मित्रञ्च समवलोक्य )

निर्मले! तिष्ठ त्वमपि। सुशील! प्रियमित्र!! त्वमपि तावत् स्थिरो भव।

( सर्वेऽपि प्रायेण संमुखीनाः यथास्थानमुपविशन्ति )

आलोकः अम्ब! श्रृणोतु भवती साम्प्रतम्। अयम्मम प्रश्नो यत्किमर्थमहं भवत्या सयत्नं नवमासपर्य्यन्तमुदरे धृतः। दुस्सहप्रसूतिव्यथां विस्म-रन्त्याऽपि स्मेराननया जनितः? किमेतदर्थमेव यदिदं नु पुत्राभिधं वस्तुजातं श्रेष्ठिहट्टे विक्रीय लक्षपतिगृहिणी भविष्यामि?

लक्ष्मीः वत्स! स्वप्नेऽपि मया नेदं विचिन्तितम्।

आलोकः तत्किमर्थं तातो मां विक्रेतुमुपक्रमते? मामजापुत्रकमेव मन्य-मानोऽसौ एतावता स्नेहेन संरक्षणसंवर्द्धनपरोऽभूत्?

लक्ष्मीः पुत्रक! न खलु पूजार्हं पितृचरणं व्यलीकवचनैराविलयुतमर्हसि। कः खलु पुत्रवान् भाग्यभाग्जनः पुत्रस्यापकारं कामयते?

आलोकः अम्ब! किमिदानीमपि दृष्टान्तोऽन्वेष्यते भवत्या? विवाहसम्बन्धेऽस्मिन् को नु खलूपक्रियते? आलोकोऽयं भवत्यास्तातचरणो वा? पश्याम्ब! विवाहसम्बन्धे केवलं कन्या वरश्च प्रभवतः। अनयोरेव द्वयोः परस्परसङ्गमनेन चक्रयोस्सहयोगेन वाहनमिव जीवनमग्रे-सरति।

लक्ष्मीः ( ससमर्थनम् )
युज्यते वत्स ! अवितथं भणसि ।

आलोकः ( सवितर्कम् )
किन्त्वम्ब ! यदि वाहनचक्रेऽधरोत्तरे स्तः यदि वा लघुमहती भवेतां तर्हि किं यानगतिस्सुखमयी भविष्यति ?

लक्ष्मीः न कदापि वत्स !

आलोकः मातः जीवनमिदं यानमेकम् । अस्मिन्नेव याने समुपविश्य धर्मार्थकाममोक्षाभिधाः पुरुषार्थाः स्वयात्रां सम्पादयन्ति । अस्मिन्नेव याने समुपविश्य मधुरमधुराः जीवनस्वप्ना हिन्दोलसौख्यमनुभवन्ति ।

अम्ब ! पत्नी पतिश्चास्य यानस्य चक्रद्वयम् । अतएव द्वयोरेव सर्वविधसामञ्जस्यं भवितुमर्हति । अन्यथा यानमिदं यावज्जीवं स्खलद्गति भविष्यति ।

सुशीलः अम्ब ! उचितं भणत्यालोकः ।

निर्मला अम्ब ! शोभनं भणति सहोदरः ।

लक्ष्मीः ( सोद्वेगम् )
एतावत्तु जानाम्यहमपि । किन्त्वनन्तरकरणीयं साम्प्रतं चिन्तनीयम् ।

आलोकः अम्ब ! मम भावी श्वसुरः कोटिपतिरिति श्रुतम्मया । साम्प्रतं स पितृचरणम्मे सहस्रपतिं विधाय धनैकपक्षपातिनं तं वशीकर्तुमीहते । पश्यतु,

मूढं बोधयति प्रबिद्धहृदयं संयोजयत्यद्भुतं
रङ्कञ्चापि नृपीकरोति नयति प्रेमास्पदं वैरिणम् ।
दग्धं शीतलयत्यनल्पशिशिरं सन्तापयत्युल्बणं
किं किं नो विदधाति विस्मयकरं भूमाविदं काञ्चनम् ।।३।।

लक्ष्मीः ( ससान्त्वनम् )
आलोक ! को न खलु जनिप्रदाता पिता सन्ततिक्षेमं न कामयते । पुनश्च नार्थैकमात्राभिरुचिस्ते पितृचरणः !

आलोकः अत्रैवाविदितास्ति भवती । यदि नाम पितृचरणस्यार्थपिशाचे-

ऽभिरुचिर्न स्यात्तर्हि किन्नु खलु कारणमस्मिन् परिणये पक्षपातस्य ! नाहमत्र किमपि वैशिष्ट्यं पश्यामि । मन्मतेन तु,

पिता क्रूरो लुब्धो द्रविणविभवाधिक्यरुचिको
ध्रुवं नो जानीते पुरुषगुणमाणिक्यविचयम् ।
कुले तस्मिञ्जाता कथमिव सुताऽपार्थिवगुणा
भजेत्साहश्यम्मे प्रकृतजनसाधारणमहो ॥४॥

लक्ष्मीः (विवेकशैथिल्यं नाटयन्ती)

भवतु वत्स ! न मे बुद्धिः प्रभवत्यत्र । जनकं तेऽनुकूलयितुं प्रयतिष्ये । अलमधिकचिन्तया ! अत्रैव प्रतीक्षस्व माम् । (इति सर्वे यथास्थानं गच्छन्ति) ।

(कतिपयकलानन्तरं भर्त्रा सार्धं पुनः प्रविश्य)

लक्ष्मीः वत्स ! आलोक ! बहु प्रयतितं मया त्वदुदीरिततर्कपुरस्सरम् । अयन्ते पितृचरणस्स्वयमेव समागतस्त्वां सान्त्वयितुम् ।

आलोकः (सासूयमिव)

मातः किम्पुनः सान्त्वनमेवोपायोऽवशिष्टः ? यदि तातचरणो नानुभवति मद्व्यथां तर्हि काऽऽवश्यकताऽस्य नाटकस्य ?

शिरोमणिः आलोक ! किमुक्तं त्वया ? काऽऽवश्यकताऽस्य नाटकस्येति ! किम्मया नाटकं क्रियते ? किम् अद्यावधि त्वां विविधसंवर्द्धनोपायैः परिपोषयता मया नाटकमेव विहितम् ?

आलोकः (सोपेक्षम्)

तात ! अलम्मामन्यथा सम्भाव्य ! किन्तु सर्वथा सत्यमिदं यद् भवान् सम्प्रति स्वसंवर्द्धनोपायानां पालनपोषणरक्षणादिव्यापाराणां वा मूल्यं वाञ्छति । तदपि पुनः मां पुत्रवस्तुजातं विक्रीय ।

शिरोमणिः (सक्रोधम्)

इदमेव त्वया पठितम् ? आलोक ! अद्य मे चक्षुषी तावदुन्मीलिते । प्रतीपं मयाऽवगतं त्वद्विषये ।

आलोकः तात ! भवन्मानरक्षार्थं निखिलमप्युत्स्रष्टुमुत्सहे । भवदीयमिदं शरीरम् । किन्तु साञ्जलिपुटं निवेदये यन्न मां नर्मपात्रीकरोतु भवान् ।

शिरोमणिः ( सस्नेहम् )

वत्स ! कस्त्वां नर्मपात्रीकरोति ? पश्य,

शिखावलोऽहं मम वर्तिका त्वं
नभोऽहमिन्दुस्त्वमदभ्रकान्तिः ।
तवापमानेन ममापमान-
स्त्वयैव युक्तस्य ममास्ति भव्यम् ॥ ३॥

आलोकः तात ! यद्येवं तर्हि प्रसीदतु भवान् ! मदन्तःकरणावसादनेन को लाभः ? नाहं कामपि दृष्टामविदितशीलव्यवहारां पितृविभवगर्वितां कलत्रवार्त्या परिणेतुमिच्छामि ।

शिरोमणिः ( अवमाननामनुभूय )

आलोक ! शीलसमुदाचारमतिक्रान्तोऽसि । मय्यपि न ते प्रत्ययः ! लक्षपतिकन्यकां वार्त्यां प्रख्यापयसि ?

आलोकः तात ! इदमेव मम वैरस्यमूलम् । अहं काञ्चित् कृषाणकन्यकां साध्वीं कलत्रीकर्तुमिच्छामि । भवान् पुनर्लक्षपतिनन्दिनीं स्नुषापदमारोहयितुमाकांक्षति । द्वयोरप्यावयोर्लक्ष्यं पृथक् ।

शिरोमणिः तत् किमयन्तेऽन्तिमो निर्णयः !

आलोकः ( साभ्यर्थनम् ) तात ! क्षन्तव्योऽस्मि । अयमेव मे निर्णयः ।

शिरोमणिः ( शीर्षं सारयन् सकृतकवेदनम् )

युज्यते ! प्राप्तं मयाऽद्य पुत्रसुखम् ! हन्त ! आत्मन एव धेनुवत्सको वलीवर्दीभूय साम्प्रतं विषाणघातैः पीडयति ?

( पर्यङ्कोपरि शिथिलं निपत्य )

उचितमाचरितं वत्स ! प्रमोहो मे व्यपगतः । पुत्रस्नेहस्यायमेवोचितो दण्डः । हन्त भोः कुतोऽयमनर्थसम्पातः ? अयि भाग्यहतक दुर्दैव ! कस्य मे जननान्तरकृतमहापातकस्येदं विस्फूर्जितम् !

( साश्रुनयनं किञ्चित्तारस्वरेण )

अस्ताचलगमनोन्मुखस्य मरीचिमालिन इव किम्मे स्वारस्यमधुना ? अद्यास्मि श्वो न भविष्यामि ! किन्तु जीवितमिदानीं शल्यभूतम् ।

लक्ष्मीः ( पार्श्वमुपेत्य साभ्यर्थनम् )

किमेवं दुःखपाथोधिं विगाहते भवान् ? कथं न वत्सानुकांक्षामनुसृत्य आत्मानमाह्लादयति ?

शिरोमणिः अयि पुत्रपक्षपातिनि ! त्वयाऽपि नामैवं विजल्प्यते ? किमुक्तं भगवता नन्दनन्दनेन गीतायाम् ? सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यत इति। पुत्रधाष्ट्र्यखलीकृतोऽहमपि सम्प्रति त्यक्तजिजीविषोऽस्मि संवृत्तः। सुखिनी भव त्वमेव पुत्रकेण सार्धम्।

लक्ष्मीः ( अश्रुपातं नाटयन्ती )

किमहं करवाणि ! उभयथाऽपि मम दैन्यम्। एकतः कूपोऽपरतः परिखा ! पतिपुत्रस्नेहमध्यवर्तिन्यहं त्रिशङ्कुदुर्दशामनुभवामि।

शिरोमणिः साध्वि ! अलं कातर्येण ! ममैव कश्चिदपकारः पुत्रीभूय शातयति। न ते दोषोऽत्र। हृदयरोगेण जर्जरीभूतोऽस्मि। अनियतवेलम्मे निधनम्। मा भैषीः। समाप्तेदानीं जीवनयात्रा !

लक्ष्मीः स्वामिन् ! किमत्र मया कर्तुं शक्यते। स्वहिताहितज्ञस्तनूजो न मयाऽनुकूलयितुं पार्यते। निषद्वरविपन्ना वृद्धहरिणीव किं करवाणि ?

( इति नयनाम्बूनि मार्जयति )

आलोकः ( आत्मगतम् )

अये, महद्दुःखमनुभवति जननी। तातोऽपि जीवितनिरपेक्षोऽवलोक्यते। हृदयरोगविपन्नःक्वचित्प्राणान्न विसृजेत्। एवं भूते सति जीवनम्मे कलङ्कितं भविष्यति।

( उष्णं निःश्वस्य )

हे प्रभो ! देहि मे सुमतिम्। पितृप्रदत्तमिदं जीवनम् ! मातृजुष्टमिदं शरीरम्। सर्वथाऽधमर्णोऽस्मि तयोः। तत्किं करवाणि ? एकतः पितृपरितोषोऽपरतः स्वप्नाङ्कुरच्छेदः !

( धृतिमभिनयति )

शिरोमणिः ( आत्मगतम् ) मद्वाचोयुक्तिमाकर्ण्यापि माणवकोऽयं न मनाग् विचलति। भवतु, अन्तिमोऽयं प्रयासः क्रियते मया !

( मृत्युमूर्च्छाप्रलापमभिनयन् )

लक्ष्मि ! क्वासि ? सुदुस्सहेयं पीडा न सोढुं शक्यतेऽधुना। शीघ्रमेहि ! आह रे दैव ! स्फुटति मे हृदयम् !

आलोकः ( ससम्भ्रमं पार्श्वमुपेत्य पादयोर्निपत्य च )

 

तातचरण ! माऽऽत्मानं क्लेशयतु ! प्रसीदतु साम्प्रतम् । अयमहं भवत्तनूजः सक्षमायाचनमभ्यर्णचरोऽस्मि ।

लक्ष्मीः (करुणं विलपन्ती)

स्वामिन् ! समाश्वसिहि तावत् । आलोकोऽयं भवद्वशंवदस्तिष्ठति । उन्मीलय तावन्नेत्रे !

आलोकः (सदैन्यम्)

तात ! तिष्ठाम्येष भवदाज्ञापालनाय । भवत्कृते सर्वस्वमपि त्यक्तुं समीहे । साम्प्रतं न मे कोऽपि निर्बन्धः ! भवदाज्ञैव गरीयसी ।

शिरोमणिः (आत्मगतम्)

सफलीभूतम्मे प्राणव्यथानाट्यम् । हन्त ! बद्ध इदानीं काञ्चनमृगः !

(चेतनामभिनीय)

वत्स आलोक ! क्वासि ? पार्श्वमायाहि तावत् !

(आलोकः शिरोमणिसमीपं गच्छति)

वत्स ! मद्वचनं मत्स्वाभिमानञ्च संरक्ष्य सम्प्रत्यनृणोऽसि जातः । चिरञ्जीव ।

(पुनः कलेवरशैथिल्यं नाटयति)

●●

# श्लोकानुक्रमणिका